खादिजनकसर्वादृष्टध्वंसलक्षणमोक्षप्रतिपादको भवति वैशेषिकशास्त्रं द्रव्यगुणकर्मसामान्यविशेषसमवायाभावात्मकसप्तपदार्थप्रतिपादक - सूत्रसंदर्भेण सकलप्रपंचनिर्णायकं भवति ॥

## अध्यात्मशास्त्रत्रयम्

अनंतरम् ॥ कपिलपतंजलिव्यासमुनीश्वरैः क्रमेण निरूपितानि सांख्यपातंजलिवेदान्तशास्त्राणि ॥ आत्मज्ञानफलवंति ॥ अध्यात्मिकशास्त्राणि त्रीणि तेषु ॥

## सांख्यशास्त्रम्

सांख्यशास्त्रम् ॥ नित्यनिर्मलनिःसंगात्मनां सन्निधानेन गुणत्रयात्मकप्रकृतिरेव पंचविंशतितत्त्वात्मकजगद्भूत्वा व्यवह्रीयत इत्याकार एव संसारबंधः ॥ अनंतरम् ॥ सत्वादिगुणत्रयानुक्रमेण श्लेष्मप्रकृति पित्तप्रकृतिवातप्रकृतिमच्छांतिक्रोधमूढतादिगुणवदुत्तममध्यमाधमपुरुषत्रयस्य वर्णरीत्यादीन् विभागवतः करोति ॥

---

श्वरकर्तृकत्व निरुतें । ह्मणोनि यथार्थे । निश्चय करितसे ॥७८॥ वैशेषिक शास्त्र तें द्रव्यगुण । कर्मसामान्य । विशेषसमवायाभावह्मणोन । परिक्रमें ॥७९॥ सप्तपदार्थ प्रतिपादक । प्रपंचस्वरूप पृथक । विभागित मुख्य । असे निरुतें ॥८०॥

### अध्यात्मशास्त्रत्रय.

आणिक पतंजलि कपिल । व्यासादिकमुनिसकलि । अनुक्रमें निरोपिलीं । प्रसिद्धपरि ॥८१॥ सांख्य पातंजल वेदांत* । ह्मणिजे आत्मज्ञान फलयुक्त । अध्यात्मिकमत्त । शास्त्रत्रय ॥८२॥

### सांख्यशास्त्र.

त्याचेठायीं । सांख्याचें सांगणें । नित्यनिर्मलसन्निधानें । गुणत्रयात्मक स्वगुणें - प्रकृतीचेनि ॥८३॥ पंचविंशतिमहदादितत्वात्मक । जगत झालें अनेक । संसारबंधनव्यवहारिक । ह्मणे निरुतें ॥८४॥ सत्वादिगुणत्रयप्रकृति । श्लेष्मप्रकृति । पित्तप्रकृति । आणिक वातप्रकृति । इति प्रकृति झाल्या ॥८५॥ शांतिक्रोधमूढगुण । उत्तम मध्यम अधम ह्मणोन । पुरुषत्रयादिकवर्ण । विभागित असे ॥८६॥

---

* एतद्रूपसभाष्यसांख्यसूत्र । योगसूत्रब्रह्मसूत्र । स्वात्मज्ञानमोक्षफलीभूत । टीकापरिष्कारें । ( कानडी पुस्तकांतील वाक्याचें भाषांतर आहे )

## पातंजलशास्त्रम्

पातंजलशास्त्रं तु यमाद्यष्टांगयोगेन मनो निश्चलतासिद्धिकारकम् ॥

## उत्तरमीमांसा

उत्तरमीमांसेत्युच्यमानोपनिषदर्थप्रतिपादकीभूतवेदान्तशास्त्रमेव प्रपंचस्य मिथ्यात्वं साधयति ब्रह्मात्मैक्यं वर्णयति ॥ अध्यात्ममतभेदः सद्भास्करीयमायावादशब्दब्रह्मवादक्रीडाब्रह्मवादा इत्येवं चतुर्विधा भवन्ति वादाः ॥

## अतिमार्गिकशास्त्रम्

अनंतरम् ॥ मायातत्त्वविद्यातत्त्वकालतत्त्ववादिभिस्त्रिभीरुद्रै रचितानि पाशुपतकापालिकमहाव्रतानीति त्रीण्यतिमार्गिकशास्त्राणि तेषु पाशुपतं मायाकर्माख्यपाशद्वयं निर्वहति तत्र प्रमाणम् ॥ वरवृतो रुद्रः पशूनामधिपतिरिति श्रुत्यर्थपर्यालोचनया तदुपबृंहणपर्यालोचनया च पाशद्वयेन रुद्रो ब्रह्मादिपशून् बध्वा स्वकार्यमशेषं कारयति तदुक्तम् ॥ प० ॥ ब्रह्माद्याः स्थावरांताश्च देवदेवस्य शूलिनः ॥ पशवः परिकीर्त्यंते सर्वे संसारवर्तिनः ॥ मलमायादिभिः पाशैस्तान् बध्नाति पशून्पतिः ॥ स एव मोचकः साक्षाद्भक्त्या सम्यगुपासितः ॥ चतु-

---

### पातंजलशास्त्र.

पातंजल तें यमादिअष्टांगयोगानें । ग्रंथित्रयभेदन । निश्चलमनें । जीवपरमैक्यकायाशोधन । निश्चय करी ॥८७॥

### उत्तरमीमांसा.

उत्तरमीमांसक ते । उपनिषदाचेनि अर्थें । प्रतिपादक निरुतें । यथार्थ पैं ॥८८॥ वेदांतशास्त्र प्रपंचासि । मिथ्यात्व साधितसे निश्चयेसि । ऐक्यत्व जीवब्रह्मासि । सांगतसें ॥८९॥

### अध्यात्ममतभेद.

भास्करीय मायावाद । शब्दब्रह्मवाद क्रीडाब्रह्मवाद । ऐसे प्रकार चतुर्विध । सांगत असती ॥९०॥

### अतिमार्गिकशास्त्र.

आणिक मायातत्व विद्यातत्व । कालतत्व इति त्रिविधयुक्त । तयात्रिरुद्रापासुनि रचित । झाले प्रसिद्ध ॥९१॥ पाशुपत कापालिक । महाव्रतादिक । ह्मणीजे अतिमार्गिक । शास्त्रत्रय ॥९२॥ त्याचेठायीं । पाशुपतशास्त्रतें । मायाकर्म ह्मणोनि

विंशतितत्त्वानि मायाकर्मगुणा अमी ॥ विषया इति कथ्यन्ते पाशा जीवनिबंधनाः ॥ ब्रह्मादिस्तंबपर्यंतान् पशून् बध्वा महीश्वरः ॥ पाशैरेतैः पतिः साक्षात्स्वकार्यं साधयिष्यतीति प्रभुरित्यादिरूपेण ॥ कापालिकमते तु नरकपालभिक्षाटनभैरवपारंम्यादि विवृणोति ॥ महाव्रतमेवास्थिधारणादिकविधायकम्

## मान्त्रिकशास्त्रम्

अनंतरं परशिवप्रणीतमंत्रशास्त्रं मोक्षांगीभूत क्रियाचर्ययोगज्ञानानि प्रमाणयति ॥ आत्मप्रतिपादनं

## आत्मप्रतिपादनम्

पुनः समस्तमतान्तरेष्वात्मस्वरूपं कीदृशमित्युक्ते ॥ देह एवात्मेति चार्वाकाः तेषामयमाशयः ॥ देहव्यतिरिक्तेष्वहमित्यात्मप्रत्ययाभावात् देहस्यैवात्मत्वं देहे चेतने किण्वादिभ्योमदशक्तिवत् चैतन्यधर्मो जन्यते तत्र किंकारणं भूतमेलनमेव चूर्णक्रमुकनागवल्लीदलचर्वणं यथा रक्तिमकरं तथैतच्चैतन्यकरं नष्टचेतनधर्मं जीवो मृत इति व्यवहारः इंद्रियाण्यात्मेति चार्वाकैकदेशिनः प्राण एव आत्मेति हैरण्यगर्भाश्चार्वाकैकदेशिनः तत्रेदमुत्तरं देहेंद्रियप्राणानां भौतिकत्वेन

---

यथार्थ । पाशद्वयं निर्णयातें । विभागित असे ॥९४॥ *आणिक महाव्रत । ते याथातथ्यअस्थि । धारणादिक सांगत । असें निरुतें ॥९५॥

## मांत्रिकशास्त्र.

यानंतर परशिवप्रोक्त । झाले अति उत्कर्षरचित । मंत्रादिसाधनयुक्त । तें मोक्षसाधन ह्मणवी ॥९६॥ क्रियाचर्या । योगज्ञानह्मणोनिया । परिक्रमे अतिशया । सांगे प्रमाणसिद्ध ॥९७॥

## आत्मप्रतिपादन.

आणि या सकळमतांतरांत । आत्मस्वरूप निश्चयार्थ । करूनि असे सांगत । तें सांगिजेल ॥९८॥ आत्मा देहचि मुख्य । ह्मणोनि चार्वाक । निश्चयपूर्वक । प्रतिपादित असें ॥९९॥ इंद्रियेंचि आत्मस्वरूप । ह्मणोनि निश्चयरूप । करितसे आक्षेप । चार्वाक एकदेशि ॥२००॥ प्राणचि आत्मकारक ॥ निश्चयपूर्वक । ह्मणे हिरण्यगर्भ चार्वाक । एकदेशी ॥१॥ आणिक देह विलक्षण । जालिया येकात्म

---

* आणिक तें कापालिक । नरकपालभिक्षाटणादिक । निश्चयें यथार्थक । सांगत असे । ( कानडी पुस्तकांतील वाक्याचें भाषांतर )

विषयत्वात्तदुपलब्धेर्विषयित्वेन विषयविषयिणोर्भेदात् देहादिकं नात्मा ॥ अनंतरम् ॥ देहादिविलक्षण एव आत्मा देहपरिमितो भूत्वा मध्यमपरिमाणत्वेन संकोचविकासयुक्त इति ॥ जैनाः ॥ तत्रोत्तरं जीवः अनित्यो भवितुमर्हति सांगत्वाद्धटवदिति ॥ बुद्धिरेवात्मेति बौद्धाः तत्रोत्तरम् ॥ बुद्धेरेकत्वमेव सिद्धान्तः बुद्धिसंततिरात्मेत्युक्तेऽनित्यत्वदोषः ॥ एकस्मिन् शरीरे अनंतात्मककल्पनापत्तेः आनंद एव आत्मेति कौळयामळशाक्तेयाः तत्रोत्तरं घुटिकापादुकातत्तदुपास्तिजन्यानंदस्यात्मत्वेऽनित्यत्वापत्तिः नित्यत्वेऽपि चिद्भिन्नत्वे जडत्वापत्तिः आनंदस्य चिद्रूपत्वे नित्यत्वे च मतान्तरप्रवेशापत्तिरिति आत्माणुपरिमाणः नाभिमध्यगतः न तु विभुः उत्क्रान्तिगत्याद्यनुपपत्तेरिति पांचरात्रिकभागवताः तत्रोत्तरम् ॥ अणुत्वे जडत्वापत्तेरप्रत्यक्षत्वापत्तेरनंतात्मकल्पनायां गौरवापत्तेः तस्मान्नात्माणुः आत्मा देहपुत्रादिरूप इति लौकिकाः तत्रोत्तरम् ॥ अनित्यत्वापत्तेः आत्मा स्वतः प्रमाणज्ञानसाध्यसमवतः प्रतिशरीरं भिन्न इति मीमांसकर्तारो भाट्टपादप्राभाकरगुरुप्रभृतयः तत्रोत्तरमात्मनो नानात्वे गौरवं न चैकत्वे देवदत्तानुभूतसुखदुःखादिकं यज्ञदत्तेनानुभूयतइति वाच्यं एकस्यैवात्मनः एतच्छरीरस्थस्य जन्मान्तरशरीरेऽनुभूतसुखस्मरणप्रसंगः शरीरभेदः प्रतिबंधक इति चेत् यज्ञदत्तीयशरीराभिन्नशरीरस्थस्य देवदत्तस्य न तथाविधसुखविज्ञानप्रसंगः शरीरयोर्भेदात् ज्ञानसमेत आत्मज्ञानमात्मैवेत्यत्र लाघवात् ज्ञानमेवात्मेति आत्मा महत्परिमाणत्वाद्गगनोपमानः सन् पाषाणवज्जडोऽपि मनः संयोगेन चिद्धर्मयुक्तं इति नैयायिकवैशे-

---

आपण । देहप्रमाणसंपूर्ण । मध्यपरिमाणें ॥२॥ संकोचविकासक । धर्मयुक्तप्रवर्तक । ह्मणोनि नेमक । जैन प्रतिपादिति ॥३॥ बुद्धीचे स्वतंत्र । आत्मा स्वयंसारा । ह्मणोनि साचार । बौद्धप्रतिपादिती ॥४॥ आत्मा आनंदचि केवळ । ह्मणोनि निश्चयें त्रिकाळ । प्रतिपादि कौलयामळ । शाक्तेयादिक ॥५॥ आत्मा नाडिमध्यगत । होऊनि असे संतत । अणुप्रमाण ह्मणत । असे पांचरात्र ॥६॥ आत्मा देहपुत्रादिरूपवंत । ह्मणोनि असे प्रणामित । धन्वंतरी आयुर्वेदादिसमस्त । लौकिकमत ॥७॥ आत्मास्वतः प्रमाण । ज्ञानसहित ह्मणोन । मीमांसक भेद आपण । ह्मणे भाट्टभास्कर ॥८॥ आत्मा गगनाकार घन । महत्परिमाण । जडरूपपाषाण । ऐसा झाला

षिकाः ॥ मीमांसकमतोत्तरेणैव दत्तोत्तराः अत्र विशेषः एतदभिमतं परमात्मा जडो भवितुमर्हति ॥ जीवभिन्नत्वात् घटवत् एतेन पांचरात्रा अपि प्रत्युक्ताः तदभिमतः परमात्मा न वेदवेद्यः। कार्यलिंगज्ञेयत्वात् नापि जीवो वेदवेद्यः अहमिति प्रत्यक्षवेद्यत्वात् नापि तयोर्भेदो वेदवेद्यः। नाहमीश्वर इति प्रत्यक्षवेद्यत्वात् तस्माज्जीवब्रह्मैक्यं वेदवेद्यं मानान्तरागम्यत्वात् न च जीवब्रह्मैक्यं तयोः स्वरूपमिति तद्ज्ञाने तदपि निश्चितमिति कथं वेदवेद्यमिति वाच्यं अनादिवासनतः प्राप्तभेदभ्रमेण तं न ज्ञातं चंद्रप्रादेशिकत्वं भ्रमेणानेकसहस्रयोजनविस्तीर्णत्वं यथा न ज्ञातं सच्छास्त्रैकवेद्यं विस्तृतत्वं तथैक्यमित्यात्मा असंगचिन्मात्र इति सांख्यपातंजलाः ॥ तत्रोत्तरमहं करोमीत्यादिकर्तृत्वादिसंगप्रतीतानेकात्मकल्पनागौरवम् ॥ आत्मा ज्ञप्तिसन्मात्र इति वेदांतिनः प्राहुः ॥ आत्मा नित्यव्यापकचैतन्यमिति पाशुपतकापालिकमहाव्रतमतस्थाः आत्मा नित्यव्यापकज्ञानक्रियारूप इति मांत्रसंज्ञिकासिद्धांन्तिनः इति पृथग् विख्याताः ॥

## मोक्षप्रतिपादनम्

अनंतरं सर्ववादिभिः प्रतिपादितमोक्षलक्षणं किमित्युक्ते मरणमेव मोक्ष इति चार्वाकाः ॥ अलौकिकाकाशमध्ये उत्तरोत्तरोर्ध्वगमनमेव मोक्ष इति जैनाः ॥ सुखदुःखादिसंबंधरहितशुद्धबुद्धिसंततिरेव मोक्ष

---

तरी ॥९॥ मनःसंयोगें संतत । असे बुध्यादिकिंचिद्धर्मयुक्त । ह्मणोनि असे प्रतिपादित । नैयायिक वैशेषिक ॥१०॥ आत्मा असंग अविकार । चिन्मात्रानिर्भर। ह्मणोनि निर्धार । सांख्यपातंजलीसी ॥११॥ आत्मा निष्फळ अरूप । ज्ञप्तिसत्तामात्रशुद्धाद्वितीय । ह्मणोनि आक्षेप । वेदांतियांसि ॥१२॥ आत्मा नित्य व्यापक। चैतन्यरूप ह्मणोनि प्रतिपादक । पाशुपत कापालिक । महाव्रत ॥१३॥ आत्मा व्यापक नित्य । ज्ञानक्रियारूपयुक्त । ह्मणोनि सिद्धांतिमांत्रसंज्ञित । पृथकसांगे ॥१४॥

### मोक्षप्रतिपादन.

अणिक सकळवादी भिन्न ॥ मतांतरी प्रतिपादन ॥ मोक्षविषयीं लक्षण ॥ कैसें ह्मणतिलें तरी ॥१५॥ देहाचें मरण ॥ तेंचि मोक्षनिर्वाण ॥ ह्मणतसें आपण ॥ चार्वाक तो ॥१६॥ तया अलौकिकआकाशांत संचरण ॥ उत्तरोत्तर गमन ॥ तेंचि मोक्षजैन ह्मणतसे ॥१७॥ सुखदुःखादि रहित ॥ शुद्धबुद्धिसततोदित॥

इति बौद्धाः आकाशादिसकललोकगमनसिद्धिरेव मोक्ष इति कौळयामळाः ॥ आनंदावाप्तिरेव मोक्ष इति शाक्तेयाः ॥ वासुदेवात्मकप्रकृतौ स्वरूपहानिं विना तत्समीपप्राप्त्या लीनमेव मोक्ष इति पांचरात्रिकाः इह परत्र पुत्रभार्यादिभिः सहयोगेन व्याध्यादिदुखं विना सुखेनावस्थितिरेव मोक्ष इति लौकिकाः प्राकृतजनाः च्युतिरहितस्वर्गादिप्राप्तिरेव मोक्ष इति कर्ममीमांसकाः षड्बुद्धिषडिंद्रियषड्विषयसुखदुःखशरीराद्येकविंशतिदुःखध्वंसवत्वेन पाषाणवत् आत्मस्थितिरेव मोक्षः तत्वसाक्षात्कारोत्पत्त्यनंतरवर्तमानयावद्विशेषगुणध्वंसो वा यद्वा तत्त्वसाक्षात्कारोत्पत्त्यनंतरभाविविशेषगुणध्वंससमानाधिकरणविशेषगुणोत्परिशून्यत्वं मोक्षः परमात्मसाक्षात्कारानंतरं तत्पूर्वोत्पन्नयावद्विशेषगुणध्वंसकालीनतत्समानाधिकरणविशेषगुणोत्पत्तिकालविशिष्टत्वमेव मोक्ष इति नैयायिकवैशेषिकाः ॥ पुनस्तत्वसाक्षात्कारोत्तरकालविशिष्टतध्वंससामानाधिकरण्यविशिष्टात्मत्वावच्छेदेन विशेषगुणशून्यत्वं मोक्ष इति तन्नवीनाः प्रकृतिपुरुषविवेकजन्याविद्यानाश एव मोक्ष इति सांख्याः ॥ योगाभ्यासबलप्राप्तमनोलयद्वारा जन्याज्ञाननाश एव मोक्ष इति योगपातंजलाः ब्रह्मात्मैकतत्त्वज्ञानस्य क्षेमसाधारणसाध्य-

---

तेचि मोक्ष निभ्रांत ॥ बौद्ध ह्मणे ॥१८॥ आकाशगमनादिसिद्धि ॥ प्राप्तितेचि मोक्षत्रिशुद्धि ॥ ह्मणे कौळयामळाहि ॥ निर्धारेसि ॥१९॥ आनंदपदप्राप्ति ॥ तेचि मोक्षस्थिति ॥ ह्मणतसे शक्तिनिश्चयेसि ॥२०॥ वासुदेवात्मकप्रकृति अंत ॥ जाणिव लीन होय अचेत ॥ तेचि मोक्ष ह्मणत पांचरात्र ॥ इहपरांत पुत्नभार्यादिसंयुक्त ॥ व्याधिदुःखक्लेशादिरहित ॥ सुखरूप असणें हेंचि मोक्ष सत्य ॥ ह्मणे लौकिकमत ॥२२॥ स्वर्गादिकपदा ॥ प्राप्ति तेचि मोक्षपद ॥ ह्मणतसे प्रसिद्ध पूर्वमीमांसक ॥२३॥ आत्मादेहेंद्रियादिएकविंशति ॥ दुःखअत्यंत सोसोनि पाषाणरीति ॥ आत्म्यानें असणें हेंचि मोक्षसत्य ॥ ह्मणे नैयायिक वैशेषिक ॥२४॥ प्रकृतिपुरुषविवेकें अविद्यानाशास ॥ तेचि मोक्षवास ॥ ह्मणे सांख्य ॥२५॥ चिन्मात्नब्रह्म आत्मैकत्वज्ञानें ॥ व्यावहारिक द्वैतबंधनें ॥ निवृत्ति तेचि मोक्ष ह्मणे ॥ वेदांतिक ॥२६॥ योगाभ्यासशक्तिनें मन ॥ लयद्वारें अज्ञान ॥ नासतेचि मोक्षनिर्वाण ॥ ह्मणे पातंजली ॥२७॥ ईश्वरत्व आणि एकांतें ॥ देऊनि प्रवाहेश्वरत्वें॥

व्यावहारिकबंधनिवृत्तिरेव मोक्ष इति वेदान्तिनः ॥ क्षेमसाधारणसाध्यत्वं च यस्मिन्सत्यमक्षणीयस्य सत्वं तदभावे तत्प्रतियोगिनः सत्वं प्रायश्चित्तसाध्यदुःखप्रागभावे मीमांसकैस्तथोक्तत्वात् प्रवाहेश्वरत्वेनेश्वरत्वमन्यत्र निक्षिप्य ज्ञप्तिमात्रेणावस्थानमात्मनो मोक्ष इति पाशुपताः कर्तृत्वाभिमान एव संसार इति तद्विपर्ययज्ञप्तिमात्रेणात्मवर्तनं मोक्ष इति कापालिकमहाव्रतस्थाः ॥ आत्मनो मंत्राध्वपदाध्ववर्णाध्वतत्त्वाध्वभुवनाध्वकलाध्वरूपषडध्वातीतपरमेश्वरसमानत्वं मोक्ष इति मांत्रसंज्ञिकसिद्धांतिनो विवृण्वंति ॥

## मतान्तरभेदः

अनंतरं वादिषु चार्वाकजैनबौद्धमीमांसकसांख्या एवानीश्वरवादिनः ॥ एतदतिरिक्तवादिनस्सेश्वरवादिनः ॥ पुनर्वादिषु चार्वाकादयो भेदवादिनः वेदान्त्येकः अभेदवादी भवति ॥

## चतुर्दशविद्याः

पुनरत्र सर्वशास्त्राणां मध्ये ॥ प. ॥ अंगानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ॥ पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥

---

आत्मासुज्ञप्तिमात्रें असणें तें ॥ मोक्ष ह्मणे पाशुपत ॥२८॥ संसारादिक प्राप्तिकर्तृत्वानें ॥ ह्मणोनि तें त्यजुन आपणें ॥ ज्ञप्तिमात्रें असणें तेचि मोक्ष ह्मणें ॥ कापालिकमहाव्रति ॥२९॥ आत्माषडध्वातीत ॥ शिवसमानत्वेंस्वंत ॥ असणें तें मोक्ष ह्मणत ॥ सिद्धांतिया ॥३०॥

## मतांतरभेद.

यानंतरें वादियांमध्यें पृथक ॥ चार्वाक जैनबौद्धमीमांसक ॥ सांख्यादिमुख्य॥ निरीश्वरवादि ॥३१॥ उरले सकळपरि ॥ संमोहमतांतरिं ॥ जे ते जाणावे चतुरीं ॥ सेश्वरवादी ॥३२॥ आणिक तयां वादियांमधीं ॥ चार्वाकादि सकळ भेदवादी ॥ वेदांतिया एकत्रिशुद्धि ॥ अभेदवादी ॥३३॥

## चतुर्दशविद्या.

आणिक इतुकिया ॥ विशेष सांगितलिया ॥ सकळसंमोहा अतिशया ॥ शास्त्रांआतु ॥३४॥ वेदचारि वेदांग षट्क ॥ मीमांसक नैयायिक ॥ स्मृतिपुराणें इतिचतुर्दशक ॥ विद्या म्हणवी ॥३५॥

## सूत्रविचारः

अनंतरं चतुर्दशविद्यानां मध्ये मीमांसा विशिष्य विंशत्यध्यायात्मिका कर्मार्थप्रतिपादकत्वेन द्विभागा भवति तन्मध्ये प्रथमभागात्मिका जैमिनिसूत्ररूपेण द्वादशाध्यायमितेति कर्तृकर्मप्रतिपादिका भूत्वा अथातोधर्मेत्यादिलोकवेदाधिकरणादिसहितान्वाहार्येण च दर्शनादिव्यंतसहस्रन्यायैः पूर्वमीमांसेति प्रसिद्धा ॥ अतः जैमिनिसूत्रसंदर्भस्य शवरस्वामिना शावरभाष्यं कृतम् ॥ अनंतरं मीमांसाशास्त्रस्य भट्टाचार्यचरणैर्वार्तिकरूपं भाट्टमेकं मतान्तरं कृतम् ॥ अनंतरं भट्टाचार्याणामंतेवासिप्रभाकरगुरुभिः शावरभाष्यस्य प्राभाकरमिति मतांतरं निर्मितं अनंतरं द्वितीयभागात्मिका देवताब्रह्मार्थप्रतिपादकत्वेनोत्तरमीमांसेति वलभद्रव्याससूत्ररूपेणाष्टाध्यायात्मिका भवति पूर्वचतुरध्यायात्मिका देवताकांडमित्युक्ता तन्मध्ये मंत्रवादवद्देवतालक्षणेति वलभद्ररामेण प्रतिपादिता तदनंतरमुत्तरचतुरध्यायीब्रह्मकांडात्मिके-

---

## सूत्रविचार.

तयाचतुर्दशक । विद्यामध्यें मुख्य । मीमांसक ह्मणिजे अधिक ॥ विशिष्ट ह्मणवी ॥३६॥ विंशति अध्याय । अर्थप्रतिपादकमय ॥ परिते भाग उभय ॥ होऊनि असे ॥३७॥ त्यांचेठायीं ॥ प्रथम भाग अंश ॥ जैमिनीसूत्ररूपें विशेष ॥ अध्यायद्वादश । म्हणवी निरुते ॥३८॥ तो कर्मकर्तृनिपुण । प्रतिपादक होऊन । लोकवेदाधिकरण ॥ म्हणे सर्वथा ॥ ३९॥ प्रथमसहस्र एक ॥ न्यायें पूर्वमीमांसक ॥ म्हणवितसे मुख्य ॥ जैमिनीसूत्रें ॥४०॥ तयासूत्रासि निर्धारें ॥ शावरमुनीश्वरें ॥ भाष्य सविस्तरें ॥ केलें प्रसिद्ध ॥४१॥ तयामीमांसक ॥ शास्त्रासि भट्टाचार्य वार्तिक ॥ रूपानें भाट्ट म्हणोनि एक ॥ मतांतर स्थापिलें ॥४२॥ आणिक यानंतरें । भट्टाचार्यांचे शिष्य प्रभाकरें ॥ शावरभाष्यासि विस्तारें ॥ प्रतिविस्तार केला ॥ ॥४३॥ तयानाम प्रभाकर ॥ म्हणोनि स्वेतर पृथक मतांतर ॥ निर्माण केलें ॥४४॥ यानंतर द्वितीय भागातें ॥ ब्रम्हार्थप्रतिपादकत्वें ॥ उत्तरमीमांसकनिरुतें॥ म्हणोनि नाम ठेवूनि ॥४५॥ व्याससूत्ररूपें अष्टाध्याय ॥ होऊनि असे भागद्वय त्यामध्यें पूर्व चतुर्थ अध्याय ॥ ते देवताकांड म्हणवी ॥४६॥ त्याचे ठायीं मंत्रवादाऐसें मुख्य । देवतालक्षण विशेख ॥ तें वलभद्रापासून प्रतिपादक ॥ विस्तारिलें ॥४७॥ आणिक ते उत्तरमीमांसक । अपर अध्याय चतुष्क ॥ ते निजकारक ॥ ब्रम्हकांड म्हणवी ॥४८॥ तयासि शंकराचार्यें ॥ ब्रम्हात्मैक्यमयें

त्युक्ता तस्यां ब्रह्मात्मैक्यप्रतिपादकं शंकरभगवत्पादाचार्यैः शारीरकब्रह्ममीमांसाभाष्यं निरूपितम् ॥ अनंतरं भाष्यस्य सर्वाचार्यसंसेवितचरणश्रीविवरणाचार्यैर्विवरणशास्त्रं कृतम् ॥ पुनर्विवरणमेव वेदान्तशास्त्रमिति मुख्यतया व्यवह्रियते ॥

## वेदान्तविषयक्रमः

तद्वेदान्तशास्त्रविस्तरः कीदृश इत्युक्ते आशीर्वादनमस्कारवस्तुनिर्देशाः शास्त्रारंभे क्रियमाणमंगलाचारास्त्रयः ॥

---

प्रतिपादक होऊनि अतिशयें ॥ भाष्य विस्तारिलें ॥४९॥ तया भाष्यासि विवरण॥ विवरणाचार्यें केलें विस्तीर्ण ॥ तें विवरणआपण ॥ वेदांतशास्त्र म्हणवी* ॥२५०॥

## वेदान्तविषयक्रम.

यानंतरवेदांतशास्त्र ॥ परि सविस्तार ॥ तो केसा कवण प्रकार ॥ विचारें सांगिजेल ॥२५१॥ आशीर्वाद नमस्कार ॥ वस्तुनिर्देश म्हणिजे त्रिप्रकार ॥ मंगलाचरण शास्त्रा आरंभासि+ ॥२५२॥

---

* आणिक त्या शांकरभाष्यासि वृत्ति ॥ पांचपादिक रामानंदीय ह्मणती॥ब्रह्मविद्याभरणइति ॥ सांगितलें पै ॥१॥ आणिक या व्याख्यानांसी ॥ तच्छिष्यांनीं रचिले तात्पर्यासी ॥ वाचस्पतिमित्ररंभा ऐसी ॥ व्याख्यान जाणा ॥२॥ त्यासि व्याख्यान कल्पतरुऐसें ॥ त्यासि व्याख्यान कौस्तुभ परिसे ॥ यापरि सिद्धांतग्रंथ रचिलासे ॥ यांसि वेदांतशास्त्र ह्मणती ॥३॥

( या ओव्या का. पु. वाक्याचें भाषांतर करून घातल्या आहेत. )

## सूत्रलक्षण.

+यानंतर सर्वोपनिषदर्थनिर्णायक ॥ श्रुतिलिंगादिपारदौर्बल्यपूर्वक ॥ प्राबल्यादिद्योतक ॥ बव्हर्थसूचक ॥१॥ मिताक्षरयुक्त ॥ विश्रुताचार्यरचित ॥वाक्य जात॥ सूत्रजाणा ॥२॥

## भाष्यलक्षण.

आणिक त्यां सूत्रांसी ॥ सूत्रानुकारिविरुद्ध वाक्यांसी ॥ रचिलें लिंगषट्कें अर्थविवरणासी ॥ तेंचि भाष्य जाणा ॥१॥

## अधिकरणलक्षण.

आणिक त्या भाष्याचे ठायीं ॥ विषयसंशय पूर्वपक्ष कांहीं ॥ सिद्धांत संगति पंचावयवांही ॥ युक्तन्यायचि अधिकरण ॥ ॥१॥

[या ओव्या कानडी पुस्तकांतील वाक्याचें भाषांतर करून घातल्या आहेत.]

## व्याख्यानलक्षणं.

पदपदार्थवाक्ययोजनाप्रश्नपरिहारा इति व्याख्यानपंचलक्षणानि

## अन्वयलक्षणं

विशेषणविशेष्यकर्तृकर्मक्रियान्वयपंचलक्षणानि

## अनुबन्धचतुष्टयं

संबंधतावच्छेदकरूपेणाभासमानवैशिष्यप्रतियोगिविशेषणं भासमानवैशिष्यानुयोगिविशेष्यम् ॥ कार्यानुकूलकृतिमान् कर्ता परसमवेतक्रियाजन्यफलशालि कर्म तिर्यक् कृतप्रकृत्यर्थः क्रियाधातूपात्तव्यापाराश्रयः कर्तेति शाब्दिकाः ॥ विषयप्रयोजनसंबंधाधिकारिण इति शास्त्रस्यानुबंधचतुष्टयं तेषु शास्त्रस्य जीवब्रह्मैक्यमेव विषयः ब्रह्मशास्त्रयोः प्रतिपाद्यप्रतिपादकभाव एव संबंधः सकलदुःखोपादानाज्ञाननिवृत्त्या नित्यानंदाप्तिरेव प्रयोजनं

## अधिकारिलक्षणं

साधनचतुष्टयसंपन्न एवाधिकारी

---

### व्याख्यानलक्षण.

आणिक पदपदार्थ वाक्ययोजन ॥ प्रश्नपरिहार म्हणजे व्याख्यान ॥ पंचकलक्षणें ॥ युक्तजाण म्हणवितसे ॥२५३॥

### अन्वयलक्षण.

आणिक विशेषण विशेष्य । कर्ता कर्म क्रिया ह्मणोन । अन्वय पंचलक्षण । ह्मणवि निरुतें ॥५४॥

### अनुबंधचतुष्टय.

आणिक विषयसंबंध ॥ प्रयोजन अधिकार यथाविध ॥ शास्त्रासि अनुबंध ॥ चतुष्टय ॥२५६॥ त्याचे ठायीं हिया महाशास्त्र ॥ विचारसाचार ॥ जीवब्रम्ह ऐक्यत्व निर्धार ॥ ते विषय म्हणवी ॥ ब्रम्हशास्त्रासि विशेष ॥ प्रतिपाद्य प्रतिपादक ॥ भाव तोचि मुख्य ॥ संबंध म्हणवी ॥२५७॥ दुःख शोक क्लेश स्थिति ॥ सकळ परिनिवृत्ति ॥ नित्यानंदप्रति ॥ तें प्रयोजन म्हणवी ॥२५८॥

### अधिकारि लक्षण.

साधन चतुर्थ ॥ संपन्न यथायुक्त ॥ तोचि म्हणवीत अधिकारी ॥२५९॥

## साधनचतुष्टयम्

अनंतरं नित्यानित्यवस्तुविवेक इहामुत्रार्थफलभोगविरागः शमादिषट्कसंपत्तिः मुमुक्षेति साधनचतुष्टयं चिद्रूपआत्मा नित्यः तदन्यत् सर्वं प्रपंचजातं मिथ्यैवेति विवेचनं ।नित्यानित्यवस्तुविवेकः इहलोकपरलोकयोः स्रक्चंदनवनितादिविषयभोगः सर्वोऽपि कर्मजन्यतया अनित्यतया च संपादनादिभोगान्तयोः क्रमेण महाप्रयासवैरस्यादिप्राप्यदुःखरूपमिति मनःप्रसारणशून्यता इहामुत्रफलभोगविरागः शमादिषड्गुणसिद्धिरेव शमादिसंपत्तिरित्युच्यते सहजसायुज्यापेक्षैव मुमुक्षेति गीयते अनंतरं शमदमतितिक्षोपरतिश्रद्धासमाधय एव शमादिगुणषट्कं। तस्मिन्। प ॥ निग्रहे मनसः शांतिर्दांति रिं·

---

## साधनचतुष्टय.

नित्यानित्यवस्तुविवेकता । इहामुत्रभोगविरागता । शमादिषट्क मुमुक्षुता। इति साधनचतुष्टय ॥२६०॥ त्याचेठायीं । चित्स्वरूपधन । आत्मा साक्षी चैतन्य । विभु असंगपूर्ण । नित्य तो एक ॥२६१॥ उरला विश्वप्रपंच समस्त । मिथ्या म्हणोन जाणणें यथार्थ ॥ तो नित्यानित्य वस्तु ॥ विवेक म्हणवी॥२६२॥ इहपरांत उभय ॥ वनितादि भोगविषय ॥ सकळ कर्मजनितपर्याय ॥ भोगुनियां ॥२६३॥ महाप्रयासविषयदुःखसंग ॥ म्हणोनि मनांत विराग ॥ तें इहामुत्रार्थ फलभोग ॥ वैराग्य म्हणवी ॥२६४॥ षट्कशमादि ॥ विविध यथाविधि ॥ सकळ सद्गुणसिद्धि ॥ ते शम म्हणवी* ॥ २६५ ॥ आणिक शमदमतितिक्षा उपरति । श्रद्धासमाधिप्रती ॥ म्हणिजे परिक्रमेइति ॥ शमादिषट्क ॥२६६॥ त्याचेठायीं॥ अंतःकरण अंकुर। वृत्तिविवर्त व्यापार। निग्रह ते साचार। शम म्हणवी॥२६७॥ बाह्यकरण । वृत्तिधारण । निग्रहनिरोधन तो दम म्हणवी ॥२६८॥ सुखदुःख अकल्पित । धैर्यसैरणसमस्त ॥ क्रोधादिजित ॥ ते तितिक्षा म्हणवी ॥२६९॥ कर्मारंभाक्ते । निजमुक्ति न लभे निरुते । म्हणोनि परित्यागते ॥ उपरति म्हणवी ॥२७०॥ श्रुतीचिया अनुसारें । आचार्यवाक्यावरि आदरें ॥ विश्वासुसाचारे ॥ ते

---

*अग्नि लागतां परिपूर्ण गृहासी ॥ ज्वाळा पाहुनि निजकुटुंबासी ॥ सोडोनि जातो निजतनुसी ॥ रक्षावया यजमान ॥१॥ तेवि जननमरणशोकसंतत ॥ प्रवाहरूप संसारताप निरुत ॥ असह्य होउनि मोक्षाकांक्षित ॥ होउनियां॥२॥ सर्वसंग त्याग करुनि ॥ यत्न करितो मोक्षालागुनि ॥ याला ह्मणती महाज्ञानी ॥ मुमुक्षुत्वमुख्यसाधन ॥३॥ (या ओंव्या कानडीपुंस्तकाच्या आधारें केलेल्या आहेत.)

द्रियनिग्रहः। तितिक्षा क्रोधसहनं सर्वेषामपि कर्मणां ॥संप्रोक्तोपरतिस्त्यागं विश्वासो गुरुवेदयोः ॥ श्रद्धा गुरूपदेशेऽस्मिन् चित्तदार्ढ्यं समाधितः

## गुरुलक्षणम्

अनन्तरं विधिवदधीतवेदान्तनिष्ठापरस्य शरणागतशिष्यस्य पुनर्यथा संशयोत्पत्तिर्न भवेत्तथा तत्त्वोपदेशं कृत्वा योऽज्ञानं परिहरति-स गुरुरित्युच्यते

## गुरुसेवालक्षणं

अनंतरंसाधनचतुष्टय संपन्नाधिकारिकृतसेवा कीदृशीत्युक्ते आप्तांगस्थानसद्भावरूपेण चतुर्विधा तत्र गुर्वनुकूलवृत्तिरेवाप्तता। गुरुपादप्रक्षालनादिकमंगं। गुरुगृहक्षेत्ररक्षणादिकं स्थानमुच्यते गुरुरेव साक्षात्परशिव इति विश्वास एव सद्भावः

---

श्रद्धा म्हणवी ॥२७१॥ गुरूपदेश । वाक्यावरि विश्वास तें दृढीकरण विशेष ॥ इति समाधि म्हणवी ॥२७२॥ सहज सायुज्यता ॥ मोक्षावरी अपेक्षता ॥ ते श्रद्धाचि मुमुक्षता ॥ ह्मणवितसे ॥२७३॥

## गुरुसेवालक्षण.

कोणीएक साधनचतुष्टय । संपत्तियुक्त अधिकारिवर्य । शिष्य सद्गुरूसि अभेदमय ॥ जाऊन शरणागत ॥२७४॥ विनयविज्ञापनसेवातत्पर ॥ गुरुदास्य झाले शिष्यवर ॥ ते चतुर्विधप्रकार ॥ लक्षण असे ॥२७५॥ आप्तअंगस्थान ॥ आणि सद्भाव ह्मणोन । ऐसे चतुर्विध शिष्य अभिन्न । परिक्रमें ॥२७६॥ त्याचे ठायीं। सद्गुरूसि आपण ॥ अनुकूळवृत्तिनें ॥ वर्ततां जाणणें ॥ आप्तशिष्य ॥२७७॥ सद्गुरूचें पादकमळ ॥ प्रक्षालनादिसेवा सकळ ॥ तत्पर असे सर्वकाळ ॥ तो अंगशिष्य ॥२७८॥ सद्गुरूचें ग्रहक्षेत्रधन । सकळ परिरक्षण ॥ तत्प्रिय तो स्थान ॥ शिष्य ह्मणवी ॥२७९॥ श्रीगुरुसाक्षात् शिवसदर ॥ ह्मणोनि विश्वास तत्पर । रत असे निरंतर ॥ तो सद्भाव शिष्य ॥२८०॥

---

## गुरुलक्षण.

यानंतरविधिपूर्वक अधीत ॥ निष्ठा ठेवी वेदांतशास्त्रांत ॥ शरणागतशिष्यसंशय दूरीकृत ॥ तत्त्वोपदेशें ॥१॥ अज्ञान परिहार करी ॥ तोचि जाणावा उपदेशकारी ॥ हेंचि शास्त्र निर्धारी ॥ ऐसें गुरुलक्षण ॥२॥

[ या ओव्या कानडी पुस्तकाचे आधारें केल्या आहेत. ]

## अधिकारिप्रभेदः

अनंतरं कर्मकांडी भक्तिकांडी ज्ञानकांडीति पृथक् त्रयोऽधिकारिणः संति तेषु गृहकृत्यादिषु अहंममेदमित्यहंकारममकारवान् कर्मकांडीत्युच्यते सकलक्रिया ईश्वरार्पणबुध्या कुर्वन् धन्यः भक्तिकांडीत्युच्यते सर्वकर्मसाक्ष्यहमिति ज्ञानकांडीत्युच्यते

## पंचाधिकारिणः

अनंतरं कर्मी मुमुक्षुः अभ्यासी अनुभवी आरूढ इत्येते उत्तरोत्तराधिकारिणः पंचविधाः। तेषु मूढभावेन स्वजातिमात्रानुसारिकर्म परिगृह्य शतजन्मानंतरं मुक्तिमान् पुमान् कर्मी। जगत्सत्यमिति विज्ञाय बाह्यकर्मनिष्ठावान् जन्मत्रयानंतरं मोक्षे मुमुक्षुः। स्वप्नवत् प्रपंचः सर्वोऽपि मिथ्येत्यभ्यंतरे ध्यानादिकर्मयुक्तः सन् जन्मद्वयानंतरं मुक्तिमान् अभ्यासी। व्यवहारमपेक्ष्य विवेकतत्परः सन् एकजन्मना मुक्तिमान् अनुभवी। विश्वविकृतिमज्ञात्वा आत्मज्ञानेन सद्योमुक्त आरूढः

---

## अधिकारिप्रभेद.

आणिक कर्मकांडी ॥ भक्तिकांडी ज्ञानकांडी ॥ ह्मणोनि विविधपरवडी ॥ अधिकारित्रय ॥२८१॥ त्यांचिठायीं देहगृहकृत्यादिअभिमत ॥ अनुक्रमें मीमांसा ह्मणत। अहंकारममकारसंयुक्त। असे तो कर्मकांडी॥२८२॥ सकळ क्रियाकर्म विधियुक्त। करुनि अनाश्रित। करी ईश्वरी अर्पित। तो भक्तिकांडी ॥२८३॥ अखिलकर्मस्तोमातें। साक्षिकर्मीसत्यार्थ॥ ह्मणे जो निरुतें॥ तो ज्ञानकांडी ॥२८४॥

## पंचाधिकारी

यानंतर आणिक ॥ कर्मी मुमुक्षु अभ्यासिक। अनुभवी आरूढ पृथक ॥ वरशिष्य ॥८५॥ होऊनि उत्तरोत्तरीं। विशिष्ट जे अधिकारी ॥ ते पंचविधप्रकारी त्याचेठायीं ॥८६॥ मूढपणें स्वजातिमात्रकृत्य ॥ धर्म धरूनि अभिमत। स्वजातिशतजन्ममुक्त ॥ झाला तो कर्मी ॥८७॥ जगत् सत्य ह्मणोनि ॥ बाह्यकर्मनिष्ठ होऊनि ॥ त्रिजन्में मुक्त झाला निदानीं ॥ तो मुमुक्षु ॥८८॥ स्वप्नतुल्य प्रपंच सर्व मिथ्या ॥ ह्मणोनि अभ्यंतरी ध्यानादिकर्मयुक्त ॥ असोनि जन्मद्वयासि मुक्त ॥ जाला तो अभ्यासी ॥८९॥ व्यवहारउपेक्षा विरति ॥ विवेकतत्पर रति ॥ होऊनि एकजन्ममुक्ति ॥ पावला तो अनुभवी ॥९०॥ विश्वविकृति किंचित ॥ न दिसे सर्वगत। आत्मज्ञानें सद्योन्मुक्त झाला तो आरूढ. ॥९१॥

## पुनरधिकारित्रयम्

अनंतरं एतज्जगत्कमलवल्लर्या मूलं किमिति विचारमुखेन श्रीगुरुं प्राप्य ब्रह्मज्ञानी सन् मुक्तिं प्राप्त एको देहादीनामनित्यतां दृष्ट्वा भोगापेक्षां विहाय श्रीगुरुं प्राप्य तत्त्वज्ञानी सन् मोक्षसंपादक एकः श्रीगुरुः स्वशिष्यस्योपदेशं कुर्वन् वर्तत इति श्रुत्वा । अकस्मादात्मज्ञानी सन् निर्वाणं संपादयन्नेक इति विवेकविरक्तिदैवगतिभिर्मुक्ताः । प्रत्येकं त्रयोऽधिकारिणः

## अष्टगुरुलक्षणम्

अनंतरं श्रीगुरव एव साधकशिष्याणां अधिकारभेदेन । पद्यं । बोधको वेदकश्चैव निषिद्धगुरुरित्यपि॥काम्यकस्सूचकश्चैव वाचकः कारको गुरुः । विहितो गुरुरित्येवमष्टधा गुरवो भवाः। तेषु शास्त्रशब्दार्थान् पंचलक्षणव्याख्यामुखेन बोधयन् यः स बोधकगुरुः । इत्यत्र शक्तिलक्षणान्यतरवृत्तिमान् शब्दः पदं वृत्त्या पदबोध्याः पदार्थो यथा गंगायां मत्स्य इत्यत्र शक्त्या गंगापदार्थः प्रवाहं लक्षणावृत्या गंगायां घोष इत्यत्र गंगापदार्थः तीरमिति वाक्ययोजना । आकांक्षा योग्यता सन्निधिमत्पदकदंबकं वाक्यं तेन वाक्यार्थबोधनं योजना यत्पदव्यतिरेक-

---

## पुनरधिकारित्रय.

आणिक ह्या अखिल ॥ जगदाकंदकमल ॥ वल्लरीचें कवण मूळ ॥ ह्मणोनिया ॥९२॥ विचारमुखें निपुण । निजरूप पावोन ॥ ब्रह्मज्ञानी होऊन ॥ मुक्त झाला कश्चित ॥९३॥ देहादि अनित्यत्व जाणोन ॥ उभयभोग अपेक्षा त्यजून ॥ श्रीगुरुकृपातत्त्वज्ञ होऊन । मुक्त झाला कश्चित ॥९४॥कश्चित श्रीगुरुशिष्यातें॥उपदेश करितां तेथें ॥ आणिक अकस्मातें। ऐकोनिया ॥९५॥ तत्वविचारनिपुण ॥ जाणोनि आत्मज्ञ होऊन । शाश्वतपदनिर्वाण ॥ पावला कोणी एक ॥९६॥ ऐशा विविध पद्धति ॥ विवेकाविचार दैवगति ॥ मुक्त झाले इति ॥ अधिकारित्रय ॥९७॥

## अष्टगुरुलक्षण.

आणिक सद्गुरुसाधक ॥ सच्छिष्यासि पृथक ॥ अधिकारत्वें विशेख ॥ बोधितसे ॥९८॥ तें गुरुलक्षण विविधाकारू ॥ बोधकगुरु वेदकगुरु ॥ आणिक निषेधगुरु ॥ काम्यगुरु ॥९९॥ सूचकगुरु वाचकगुरु ॥ कारकगुरु ॥ विहितगुरु ऐसे अष्टप्रकार गुरु । भिन्न भिन्न ॥२००॥ त्याचेठायीं शास्त्रक्रमसंकेत ॥ शब्दसिद्धिअर्थ ॥ बोधी यथाविहित ॥ तो बोधक गुरु ॥१॥ विचारें तत्वात्मक ॥ यथा

प्रयुक्तं यत्पदस्य वाक्यार्थानुभावकत्वं।तत्पदस्य तत्पदेन साकमाकांक्षासमभिव्याहृतैकपदार्थतात्पर्यविषयापरपदार्थप्रतियोगिकवाक्यार्थो योग्यता अव्यवधानेन वाक्यार्थप्रतियोग्युपस्थितिः संनिधिः। पद्यं। सत्यं ज्ञानं परं ब्रह्म सुखं निर्गुणमुत्तमं।जीवाभिन्नं जगत्कर्तृ जगत्स्थापकनाशनं ॥ इत्यादौ षडैकवाक्यतावाक्यैकवाक्यताप्रतिपत्त्यां वाक्यार्थं संधीय वाक्ययोजना ब्रह्मशब्दार्थं संदिहानस्य किं ब्रह्मेति पदं प्रश्नः प्रश्नबीजसंशयनिवर्तकमुक्तं वाक्यं परिहारः। एतल्लक्षणयुक्तव्याख्यानकर्ता बोधकगुरुः तत्त्वप्रदर्शको वेदकगुरुः वश्याकर्षणादिभिरिहलोके सुखदः परलोके दुःखदः स निषिद्धगुरुः पुण्यकर्मोपदेशेन इहलोकपरलोकयोः सुखप्रदः काम्यगुरुः विवेकमुखेन शमदमादिसद्गुणप्रदःसूचकगुरुः विषयाणां मिथ्यात्वप्रदर्शनेनात्मानुरागप्रदः वाचकगुरुः शिवजीवैक्यज्ञानप्रदः कारणगुरुः संशयनिरसनद्वारेण नित्यमुक्तिप्रदो विहितगुरुः

## शिष्योपसन्नतिः

अनंतरं सद्गुरुसच्छिष्ययोर्मध्ये कश्चनैकोऽधिकारी तापत्रयाग्निना दग्धः सन् व्याकुलितचित्तो भूत्वा अहं कः मम संसारः केन प्रकारेण प्राप्तः अयं यन्मुखेन निवर्ततीति विचार्य पत्रपुष्पफलसमिधाद्युपहारसहित-

---

परिपृथक । सकळदर्शक । तो वेदक गुरु ॥२॥ वश्यआकर्षणें । इहलोकीं सुख स्थापणें । परलोकीं दुःख सांगणें । तो निषेध गुरु ॥३॥ पुण्यकर्म उपदेशें इहपरांत सरिसें । सुखप्रदायक विशेषें । तो काम्यगुरु ॥४॥ विवेकमुखें शमादि। षड्गुणपरिसिद्धि । प्रदायक सकळादि । तो सूचकगुरु ॥५॥ विषयमिथ्यत्वेंपृथक। दर्शन दाऊनि विशेष । आत्मअनुरागप्रदायक । तो वाचकगुरु ॥६॥ जीवशिवऐक्य । ज्ञानसमेतसुख । संप्रदायक । तो कारकगुरु ॥७॥ संशयनिवृत्तिद्वारें ॥ नित्यमुक्तत्व विशेषाकारें । प्रदायक निर्धारें । तो विहितगुरु ॥८॥

## शिष्योपसन्नति.

आणिक सद्गुरुसच्छिष्यांत । वर अधिकारी कश्चित । तापत्रयाग्नि संतप्त। होऊनि व्याकुळचित्त ॥९॥ मी कवण मज हा संसार । किमर्थ जाला व्यवहार। हा कवणमुखें पैं निर्धार । निवृत्ति होय ॥१०॥ ह्मणोनि विचार पाहून । पत्रपुष्पफळादिकरून । आपण सहपाणि होऊन । श्रद्धापूर्वक ॥११॥ विद्याविनयवैराग्यशक्त । षड्गुणसहितयुक्त । श्रीगुरुवर साक्षात । पावोनिया ॥१२॥ श्लोक ॥

पाणिर्भूत्वा विद्याविनयवैराग्यादिसद्गुणसमेतः श्रीगुरुं प्राप्य । चैतन्यं शाश्वतं शांतमित्याद्यष्टमंत्रपूर्वकं पदद्वयकरद्वयभुजद्वयवक्षो ललाटात्मकाष्टांगं भूसंयुक्तं कुर्वन् प्रणतो भूत्वा पश्चादुत्थाय भयभक्तिभ्यां करकमलं शिरःस्थं कृत्वा किंकरभावमंगीकृत्य कार्पण्यं प्रदर्श्य संतोषेण स्तुत्वा ज्ञानवैराग्यबलैश्वर्यकीर्तिश्रीमयषड्गुणसमग्रतया भगवन्नहो सद्गुरो आयासविहीनतया यत्प्रकारेण मम भवबंधनं परिच्छियत इति विज्ञापनाकरणमेव शिष्यस्य विधिवदुपसन्नत्वम्

## उपदेशक्रमः

अनंतरमुपसन्नीभूतशिष्यस्याधिकारं निरीक्ष्य कृपालोचनेन दृष्ट्वा माभीतो भवेति अभयकरं शिरसि विनिक्षिप्य श्रुतियुक्त्यनुभवैः तस्य देहाद्यात्मबुद्धिं परिहृत्य ज्ञप्तिरूपस्त्वमेव परब्रह्मेति ज्ञानोत्पादनमेव श्रीगुरोरुपदेशः

## बोधप्रकाशः

पुनरुपदेशक्रमे उद्देशो लक्षणं परीक्षा चेति बोधकप्रकारत्रयं तत्र ॥

---

चैतन्यं शाश्वतं शान्तं व्योमातीतं निरंजनं । नादबिंदुकलातीतं तस्मैश्रीगुरवे नमः ॥१॥ इति अष्टमंत्रपूर्वक भावप्रिय । पादद्वय भुजद्वय । करकमलद्वय । ललाट वक्षःस्थळ ॥१३॥ साष्टांग दंडप्रणीत । भयभक्ति अभिमत । करसंपुष्ट जोडूनि निरुत । किंकरभावें ॥१४॥ दुर्घट उपलखूनि । कार्पण्य दाऊनि । स्तोत्र करूनि । अतिस्नेहें ॥१५॥ ज्ञानवैराग्यें सबळ । ऐश्वर्यकीर्तिश्रीपरिबळ । इत्यादिसकळ । षड्गुणसंपन्न ॥१६॥ हे भगवन सद्गुरुमूर्ति । अनायासें भवबंधनिवृत्ति । कवणप्रकारें प्राप्ति । होय मज ॥१७॥ ह्मणोनि याकारणें । शिष्यविधिवदुपसन्न । श्रीगुरुसी विज्ञापन । करिता झाला ॥१८॥

## उपदेशक्रम.

मग तो श्रीगुरुआपण । अति उपसन्न । शिष्याधिकार परिक्षून । आनंदभरें । ॥१९॥ कृपावलोकें पाहूनि । अभयपुत्रा ह्मणोनि । हस्तमस्तकस्थानीं । ठेविता झाला ॥२०॥ श्रुतियुक्तिनें त्याचें जडत्व । देहाद्यात्मबुद्धि मुख्यत्व । नेतिमुखें निरसूनि सत्यत्व । तूंचि आपण ॥२१॥ परब्रह्मचि शिष्ट । ह्मणोनि निजतत्व एकदाट । दाखविलें तो उत्कृष्ट । गुरूपदेश ॥२२॥

## बोधप्रकाश.

तयासि उपदेशक्रमासि मुख्य । उद्देशलक्षणपरीक्षे । ह्मणोनि पृथक बोधप्रका-

पद्यम्॥उद्देशो नाममात्रोदितमतितातिकृद्वस्तुसंकीर्तनात्मा उद्देश्यत्वाद्य-वच्छेदकसमनियतज्ञानकृद्वस्तुलक्ष्म ॥ लक्ष्ये लक्ष्मोपपत्तिं विदधदम-लगीः सद्विचारः परीक्षाशास्त्रत्रैविध्यमेवं निजगुणविबुधो वक्ति भेदेन धन्यः ॥ स्वयं समर्थयितुमिष्टं वस्तु नाममात्रेण कीर्तयतीति यत् तदु-द्देशः॥ सास्नादिमती गौरितिवत् पश्चाल्लक्ष्यनिष्ठलक्ष्यतावच्छेदकसम-नियतधर्मप्रतिपादकवचनं लक्षणम् ॥ लक्ष्यस्य लक्षणोपपत्त्यनुकूल-विचारः परीक्षा ॥ लक्ष्यतावच्छेदकसमनियतत्वमसाधारणत्वम् ध-र्मस्य॥ न च घटेतरव्यावृत्तेरपि तत्समनियतत्वेन लक्षणत्वापत्तिः ॥ न चेष्टापत्तिः साध्याविशेषदोषप्रसंगात् घटः इतरेभ्यो भिद्यते घटेतर-व्यावृत्तिमत्वादित्यनुमान इति वाच्यम् ॥ व्यावर्तकधर्मो लक्षणमिति पक्षे व्यावृत्तिकेवलान्वयिधर्मभिन्नत्वं विशेषणं देयं व्यवहाराप्रयोजक-धर्मो लक्षणमिति पक्षे न देयं व्यावृत्यादेरपि व्यवहारप्रयोजकत्वात् लक्षणस्य त्रीणि दूषणानि सन्ति अव्याप्तिरतिव्याप्तिरसंभवश्चेति लक्ष्य-तावच्छेदकसमानाधिकरणाभावप्रतियोगिन्यव्याप्तिः ॥ यावल्लक्ष्यवृ-त्तित्वे सत्यलक्ष्यवृत्तिरतिव्याप्तिः ॥ लक्ष्यतावच्छेदकविरुद्धधर्मः असं-भवः सदाशिवाख्यपरब्रह्मणः जगज्जन्मस्थेमभंगकर्तृत्वलक्षणं दूषण-त्रयरहितं प्रमाणं लक्षणं चेति वस्तुसिद्धिप्रसादकमिति न्यायेन ॥ प-द्यम्॥ निरूप्य लक्षणं सम्यग्योगी निजगुणाभिधः॥निरूपणं प्रमाणानां करोतीष्टस्य सिद्धये ॥

## प्रमाणलक्षणम्

प्रमाणज्ञानस्य कारणीभूतेश्वरादृष्टकालकर्तृकरणादयः तेषां ज्ञानो-त्पत्तिव्यापाराश्रयासाधरणहेतुरेव प्रमाणम् ॥

---

रत्रय ॥२३॥ त्याचें ठायीं । गुरुनें आपण स्वतः । अनुभवली वस्त । ते दिधली इष्टार्थ । तये स्तुति ॥२४॥ सच्चिदानंद । नित्यपरिपूर्ण निर्बंध । ह्मणोनि करी स्तुतिसंवाद । तो उद्देश ह्मणवी ॥२५॥ गळगंचयुक्त तेचि रोही आपण । ते व-स्तुसि असाधारण । धर्म सांगे तें लक्षण। ह्मणवी निरुतें ॥२६॥ लक्षित झालिये वस्तुतें । तें लक्षण आहे नाहीं निरुतें । ह्मणोनि विचारु करणें तें । परीक्षा ह्मणवी ॥ २७* ॥

---

* यानंतर प्रभा हेचि यथार्थज्ञानासी । कारणें असतीं विविध जशीं । ईश्वर,

( पुढें चालू. )

## प्रमाणविभागः

अनंतरं प्रत्यक्षानुमानागमोपमानार्थापत्त्यनुपलब्धिसंभवैतिह्यप्रमाणानीति वस्तुसिद्धेरष्टौ प्रमाणानि तेषु घटादिसाक्षात्कारकरणमिंद्रियं प्रत्यक्षप्रमाणं धूमाद्यधिकरणवृत्तिव्यावृत्त्यभावाप्रतियोग्यग्न्यादिज्ञानजनकधूमादिज्ञानमनुमानं अनंतरमुक्तानुमानस्य प्रतिज्ञाहेतूदाहरणान्यंगानि पर्वतो वन्हिमानिति पक्षसाध्यसंबंधबोधकं वाक्यं प्रतिज्ञा ज्ञानलक्ष्यकधूमवत्त्वादिति पंचम्यंतं हेतुः यो यो धूमवान् स सोऽग्निमान् यथा महानस इति वाक्यमुदाहरणं एतत्त्रितयवाक्यं न्यायः प्रयोगहेतुभूतार्थं तत्त्वज्ञानजन्यशब्दः

## आगमप्रमाणम्

समभिव्याहृतपदार्थप्रतियोगिकतात्पर्यविषयसंसर्गधीजनकशब्दः

---

## प्रमाणविभाग.

आणिक प्रत्यक्षप्रमाण । अनुमान प्रमाण । आगमप्रमाण । अर्थापत्तिप्रमाण ॥२८॥ उपमानप्रमाण । अभावप्रमाण । संभवप्रमाण । ऐतिह्यप्रमाण ॥ २९ ॥ इतिप्रकारविविध । वस्तुसिद्धिसिप्रसिद्ध । प्रमाणअष्टविध । कारण ह्मणवी ॥३३०॥ त्याचेठायीं । घटादिक दर्शन । तेंचि प्रत्यक्षप्रमाण । ह्मणवितसे ॥३१॥ धूम्रसंयोगें करून । अग्नीचें ज्ञान । तें अनुमानप्रमाण । निरुते ह्मणवी ॥३२॥ तयाअनुमान । प्रमाणासि प्रतिज्ञ । हेतुदृष्टांत ह्मणोन । दृष्टान्तत्रय वर्तति ॥३३॥ त्याचेठायीं । महापर्वत स्थानीं । सर्वथा असे अग्नि । ह्मणोन सांगणें वचनीं । ते प्रतिज्ञा ह्मणवी ॥३४॥ धूम्रसंयुक्त असे पै निश्चित । ह्मणणे तो हेतु । ह्मणवी जाणिजे ॥३५॥ महानसान्यायें विहित । ह्मणणे समीपस्थित । समक्षदृष्टांत । ह्मणवी निरुतें * ॥३६॥

## आगमप्रमाण.

ओव्याः—आणिक यथादृष्टार्थ वादि जाला । आप्तवचनें नदीतिरींफळा ।

---

मागीलपानावरून:—

अदृष्ट, काल ऐशीं । कर्तृत्वादि ॥१॥ त्यांचे ठायीं ज्ञानोत्पत्तिव्यापारा । आश्रयभूत होऊनी तत्परा । असाधारण हेतुचि निर्धारा । प्रमाण ऐसे पैं ॥२॥

* आणिक या अनुमानप्रमाणासी । असतीं निगमनादि अंगें ऐशीं । सव्यभिचार, विरुद्ध तैसीं । सत्प्रतिपक्ष, असिद्धी ॥१॥ बाध इत्यादि हेत्वाभासरूप । दोष नसुनीं अनुकूल तर्कव्याप । ( व्याप्ति ) । इत्यादि असुनी सहकारिप । प्रामाण्यासी परंपरासाधक॥२॥ (या ओव्या कानडी पुस्तकाच्या आधारें केल्या आहेत.)

आगमप्रमाणं यथाभूतार्थपदाप्तवचनं वा आगमप्रमाणं दिवा अभुंजानस्य देवदत्तस्य रात्रिभोजनधीजनकपीनत्वान्यथानुपपत्तिर्दृष्टार्थापत्तिप्रमाणं जीवन् देवदत्तो गृहे नास्तीति श्रुत्वान्यत्र वर्तत इति ज्ञानं श्रुतार्थापत्तिप्रमाणं गोसदृशो गवय इति आरण्यकवाक्यश्रवणानंतरं वनं गतस्य नागरिकस्य गोसादृश्यविशिष्टगवयपिंडदर्शनमयमसौ गवयशब्दवाच्य इति संज्ञासंज्ञिसंबंधरूपशक्तिवृत्तिज्ञानजनकमुपमानं भूतले घटो नास्तीति घटाभावज्ञानजनकः यद्यत्र घटोऽभविष्यत्तदा भूतलमिवाद्रक्ष्यत् अतो दर्शनाभावोऽस्तीति तर्कसहकारिकघटानुपलंभः अभावप्रमाणं सहस्रसंख्यायां शतसंख्या संभवतीति ज्ञानं संभवप्रमाणं अस्मिन्वटवृक्षे यक्षः तिष्ठतीति लोकवार्ता या यक्षविषयकज्ञानमैतिह्यप्रमाणम् अनंतरं तेषु प्रमाणेषु चार्वाकानां प्रत्यक्षमेकं प्रमाणं शब्दानुमानादीनामुत्कटकोटिसंशयसंपादकत्वेन प्रामाण्यं नास्तीति प्रवृत्यादेरुत्कटकोटिकसंशयादिति जैनबौद्धाः वैशेषिकानां प्रत्यक्षमनुमानं चेति प्रमाणद्वयं ननु वैशेषिकाणां मते शब्दस्याप्रमाणत्वे श-

---

दिकसद्भाव ज्ञानकळा। ते आगमप्रमाण ह्मणवी ॥३७॥ दिवाभोजन न करी देवदत्त। देहपुष्ट देखोन रात्रींभोजन करीत। ह्मणोनि कल्पिजें साक्षात। ते दृष्टार्थापत्ति प्रमाण ह्मणवी ॥३८॥ सुखी असे देवदत्त। तो नसे गृहांत। तरी स्थानांतरी कश्चित। गेला असे ॥३९॥ ह्मणोनिया युक्ति। जाणिजे तयाचि स्थिती। ते श्रुतार्थापत्ति। प्रमाण ह्मणवी ॥४०॥ गोसदृश गवय राही ह्मणोन। वाक्यश्रवण ऐकोनि। अरण्यस्थानि देखोन तद्विषयज्ञान। तें उपमानप्रमाण ह्मणवी ॥४१॥ या भूतळांत घट नास्ति ह्मणोन। घटअभावज्ञान। ते अभावप्रमाण। ह्मणवितवे ॥४२॥ सहस्रसंख्येचे ठायीं कारण। शतसंख्याज्ञान। तें संभवप्रमाण। ह्मणवी निरुतें ॥४३॥ या वृक्षाचे ठायीं यक्ष आहे। ह्मणोनि लोकवार्ता यक्षविषय। ज्ञान तें ऐतिह्य प्रमाण ह्मणवी ॥४४॥ * या प्रमाणाचे ठायीं कारण। चार्वाकाशी प्रत्यक्षप्रमाण। जैन बौद्ध वैशेषिकलागून। अनुमानप्रमाण। सांख्यासि आगमप्र-

---

* आणिक त्या प्रत्यक्षादिप्रमाणांत। ध्रुवादिविषयदेशांत। तत्तदाकारव्याप्त। होऊनि परिणत ॥१॥ अंतःकरणवृत्त्यादिवैचित्र्य। तत्तदधिष्ठानोपाधीय। संप्रदायाध्याय। मननाद्यनुभववेद्य असती ॥२॥

(या ओव्या कानडी पुस्तकाच्या आधारें केल्या आहेत.)

ब्दादर्थधीर्नस्यादिति चेन्न स्यादेवानुमानविधया न हि वयं शब्दस्य प्रामाण्यं निराकुर्मः ॥ अनुमानांतर्गतत्वेन तथाहि गोपदमस्तित्व-वद्गोचरज्ञानपूर्वकं अस्तिपदसाकांक्षगोपदत्वात् ॥ यन्नैवं तन्नैवं यथा आकाशं गौरस्ति तावत् स्वधर्मितास्तित्वान्वयबोधानुकूला-कांक्षादिमत्पदस्मारितत्वात् घटवदस्ति पदसमभिव्याहृतगोपदस्मा-रितत्वात् चक्षुर्वदिति सांख्यानां प्रत्यक्षानुमानागमा इति प्रमाणत्रयं तत्र युक्तिमग्रे निरूपयिष्यामः ॥ नैयायिकानां प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि चत्वारि शब्दस्य पृथक्प्रमाणत्वे युक्तयः पदजन्यपदार्थ-स्मृतिः स्वरूपसत्येवान्वयबोध उपयुज्यते न तु ज्ञाता प्रमाणाभावात् पदैरस्मारितस्यापि तत्स्मारित्वग्रहादन्वयबोधप्रसंगाच्च गौरस्तीत्यादि-वाक्यादस्तित्वेन गौः श्रुतः न त्वनुमितः इत्येवानुमन्तव्यं श्रोतव्यो मंत-व्य इत्यादिप्रयोगं दृष्ट्वा शाब्दितस्यापि शृणोतेः शक्यत्वावच्छेदकत्वात् प्राभाकराणामर्थापत्तिसहितोक्तप्रमाणानि पंच तेषां मते वैदिकवा-क्यानि प्रमाणानि लौकिकवाक्यानि बोधितार्थबोधकान्यनुपपादका-नि साकांक्षत्वादेरिदंवाक्यार्थगोचरज्ञानवदुक्तत्वरूपस्याप्रोक्तत्वस्या-पि निश्चयः शाब्दादिहेतुः अतो नैकपदार्थधर्मिकस्यापरपदार्थान्वय-बोधोऽनुमितिः ॥ सिद्धिसत्त्वे विनानुमितात्सांतरसंभवात् परं त्वन्य एव किं त्वसौ गृहीतग्राहित्वान्नप्रमाणं यज्जातीयविशिष्टज्ञानत्वाव-च्छेदेन समानाकारनिश्चयोत्तरत्वं तज्जातीयान्ययथार्थज्ञानस्यैव गृही-तग्राहित्वेन प्रमाणत्वात् ॥ अत एव धारावाहिकप्रत्यक्षव्यक्तीनां स-मानाकारग्रहोत्तरवृत्तित्वेऽपि न तासां परमात्महानिः ॥ हानिस्तु स-मानाकारानुभवसमुत्थानां स्मृतीनां गुरूणां मते तात्पर्यनिश्चयस्यान्व यधीहेतुत्वात् अन्यथा घटकर्मत्वाद्यन्यपरत्वस्य निश्चयेऽपि घटमित्या दिवाक्यात् घटीयकर्मत्वमित्यन्वयबोधापत्तेरिति चेत् कर्मताधर्मिक-घटाद्यन्वयधीपरत्वाभावनिश्चयदशायां प्रमेयत्वादिप्रकारेण घटकर्म-त्वादिपरत्वस्य निश्चयेऽपि घटीयं कर्मत्वमित्यन्वयमतेरनुत्पत्त्याकर्म-ताधर्मिकघटान्वयबोधपरत्वप्रकारकनिश्चयत्वेनैव तात्पर्यधियःकारण-त्वेन वाक्यार्थस्य तत्राप्रवेशाद्वस्तुतः समानानुपूर्विकस्यैव वाक्यान्त-रस्य तस्यैव कालान्तरमन्तर्भाव्यघटीयकर्मत्वादिपरत्वनिश्चयस-त्वेऽपि श्रूयमाणवाक्यव्यक्ताविद्यानामंतर्भावेन तत्परत्वस्यानिश्चये

भावंनिश्चये वा घटीयं कर्मत्वमित्याद्यन्वयमतेरनुत्पाद्याद्विशिष्यैव तत्तद्वाक्यधर्मिकघटकर्मत्वादिपरत्वनिश्चयस्य तत्तदन्वयबोधहेतुत्वमुपेयं तथा च तद्धेतुभूतानां प्रकरणादिज्ञानानामेव विज्ञानव्यक्तीनां तदात्वमुचितं ॥ अवश्यकल्पे पूर्ववर्तिताकत्वात् । अत एव सैंधवमानयेत्यादावपि लवणपरत्वा धीर्न लवणाद्यन्वयबुद्धौ हेतुः किंतु तदर्थकत्वेनाभिमतभोजनादिप्रकरणस्य प्रतिसंधानमिति न्यायसिद्धान्तबाधकमुपेक्ष्य वाक्यार्थप्रतीतिजनकतयाभिप्रेतस्य तात्पर्यज्ञानमवश्यं शब्दसामान्ये हेतुः । तस्य संशयव्यतिरेकनिश्चये तदनुत्पादात् । तन्निश्चयस्यैव युगपदनेकपदार्थोऽपस्थितावेकार्थमात्रान्वये विनिगमकत्वात् लक्षणाकल्पकत्वात् मुख्यार्थबाधस्य सर्वत्र लक्षणायामसंभवात् तथा च तात्पर्यावच्छेदकतयैव सर्वत्र वाक्यार्थसिद्धेः प्रत्यक्षानुमितिभ्याम् भिन्नमनुभवं भावयन्नपि शब्दो गृहीतग्राहत्वेनानुवादक इत्यागमवैदिकवाक्यमेव प्रमाणं । लौकिकमनुवादकमत्र केचित् । अज्ञातार्थावगाहिज्ञानकरणत्वलक्षणप्रमाणत्वाभावेऽपि तद्वदिति तत्प्रकारकानुभवेकरणत्वलक्षणप्रामाण्ययुक्तं लौकिकवाक्यमपि प्रमाणं तथा च गुरूणां मते पंचविधप्रमाणानीति सिद्धं भाट्टानां वेदान्तिनामभावप्रमाणसहितं गुरुमतोक्तप्रमाणपंचकं प्रमाणषट्कम् । पौराणिकानां संभवैतिह्यप्रमाणद्वयसहितं वेदान्तमतोक्तप्रमाणषट्कमिति प्रमाणाष्टकमनंतरं एवं प्रमाणभेदं निरूप्य अथ पदार्थचतुष्टयं निरूप्यते

## पदार्थविवेकः

अथ पारमार्थिकव्यावहारिकप्रातिभासिकतुच्छेति पदार्थाश्चत्वारः तेषु शुद्धशिवचैतन्यमेकमेव पारमार्थिकः गगनादिप्रपंचमखिलं व्याव-

---

माण । एकदेशी नैयायिकासि उपमानप्रमाण । प्रभाकरासिधारण । अर्थापत्तिप्रमाण ॥४६॥ भाट्टवेदांतिया लागून । अभावप्रमाण । पुराणिकासी संभवप्रमाण । ऐतिह्यप्रमाण ॥४७॥ ऐशीं हीं अष्टप्रमाणें । मतासि अभिमत ह्मणोन । विचारें विवरण । केलें यथामति ॥४८॥

---

## पदार्थविवेक.

* यानंतर पारमार्थिक । व्यावहारिक । प्रातिभासिक । तुच्छ ऐसे ॥१॥ चार पदार्थ असती । आणिक यां पदार्थांत । शुद्ध शिवचेत । ( चैतन्य ) । एकचि

( पुढें चालू. )

हारिकः रज्जुभुजंगशुक्तिकारजतमरुमरीचिकादयः प्रातिभासिकाः वंध्यापुत्रशशविषाणादयः असद्रूपाः तुच्छः पदार्थ इति पदार्थचतुष्टयं निरूपितम्

## पदार्थद्वयम्

अथदृग्दृश्यमिति पदार्थद्वयं निरूप्यते तत्र दृग्रूपपरब्रह्मणि भेदत्रयराहित्यं प्रतिपादयति । दृगंतःकरणावच्छिन्नचैतन्यमिति केचित् । अविद्यावच्छिन्नचैतन्यं दृगित्याचार्यवाचस्पतिमिश्रचरणाः । अविद्याप्रतिबिंबचैतन्यमिति विवरणाचार्यचरणाः ॥ अविद्याप्रतिबिंबचैतन्यं जीवः मायाप्रतिबिंबचैतन्यं ब्रह्मेति संक्षेपशारीरकाचार्यस्वामिनः मित्राणां मते अविद्यानानात्वेन जीवनानात्वं विवरणाचार्याणां मते मायैकत्वेन मायाया बिंबरूपं चैतन्यं ब्रह्मप्रतिबिंबरूपं चैतन्यं जीव एकः । तरत्यविद्यां विततां प्रज्ञावानित्यत्राविद्याया एकत्वश्रवणात् जीव एकः मायाभिरिंद्रो बहुः स्यादिति वचनेन तत्तदवच्छिन्ना बहवो जीवा इति दृग्रूपव्यवस्थितिः दृष्टिस्त्वंतःकरणवृत्तिप्रतिबिंबितचैतन्यं दृश्यन्तु चैतन्यगोचरः । दृक् चैतन्यं विषयी दृग्रूपचैतन्यगोचरवस्तुजातं विषयः सात्विकाविद्याप्रतिबिंबचैतन्यमीश्वरः तामसाविद्याप्रतिबिंबचैतन्यं जीव इति केचिदाचार्याः । दृग्दृश्यमितिपदार्थद्वयं । ननु दृशोऽपि दृश्यत्वात् । एकपदार्थ इति वक्तव्यमिति चेन्न

---

### दृग्दृश्यविवेक.

यानंतर बग् दृश्यमय । ह्मणजे पदार्थद्वय । दृक् अशेष चिन्मय । त्याचे ठायीं ॥४९॥ स्वगतभेद । सजातीयभेद । विजातीयभेद । ह्मणोनि इति ॥३५०॥ त्रिविधपरिभेद । करावयाछेद । दृष्टांत योग्यताप्रसिद्ध । प्रमाण तो कैसा ॥५१॥ लोकांत प्रत्यक्ष । कोणी एक वृक्ष । तया पत्रपुष्पफलादिक । स्वगतभेद ह्मणवी

---

( मागील पानावरून. )

असे पारमार्थिक ॥२॥ रज्जुभुजंग न्याय । शुक्तिकारजतन्याय । मरुमरीचिकान्याय । प्रातिभासिक होय ॥३॥ वंध्यापुत्र न्याय । शशविषाणन्याय । इत्यादि न्याय । असत् असे तुच्छ जाणा ॥४॥ गगनवाय्वादिक । सर्व प्रपंचक । व्यावहारिक । ऐसें जाणा ॥५॥

### पदार्थद्वय.

आणिक हे पदार्थ । शिवशक्ति कोणी ह्मणती । ब्रह्ममाया कोणी ह्मणती । नित्यानित्य कोणी ॥१॥ ( या ओव्या कानडी पुस्तकाच्या आधारें केल्या. )

दृशः शास्त्रशिरोजन्यवृत्तिविषयत्वेऽपि चैतन्यविषयत्वाभावात् चैतन्यवेद्यं दृश्यं चैतन्यावेद्यं दृग्रूपचैतन्यं स्वप्रकाश्यत्वेनावेद्यत्वात् अतो न विभागानुपपत्तिः स्वगतभेदस्वजातीयभेदविजातीयभेदास्त्रयो निरसनीयाः एतेषां दृष्टान्तः क इत्युक्ते लोके कस्यचिदेकस्य वृक्षस्य पत्रपुष्पफलादिविभागेन स्वगतभेद इत्युच्यते वृक्षान्तराद् भेदः स्वस्मिन्सजातीयभेदो भवति पाषाणादिप्रतियोगिकभेदो वृक्षे विजातीयभेदो भवति

## भेदनिराकरणम्.

अनंनरं सद्रूपब्रह्मगगनमिव निरवयवतया सत्ये सत्यांतरं नास्तीत्यनेन ब्रह्मणि स्वगतभेदस्वजातीयभेदौ न स्तः। जगत्कारणमायातत्कार्यादिकं वर्तत इति। सत्यब्रह्मणि तद्भेदोनास्तीति कथमिति चेल्लोके चित्रकारस्य चित्रशक्तेर्यथाभेदो नास्ति सन्मात्रब्रह्मणः मायाशक्तिवैलक्षण्यं नास्तीति ब्रह्मणः विजातीयभेदो नास्तीति सिद्धं विद्यमानोऽपि मिथ्याभूत इति न सत्यः ॥

## सिद्धान्तश्रुतिः

अनंतरं एतस्मिन्नर्थे एकमेवाद्वयं ब्रह्म तस्मिन्नाना न चास्ति हि श्रु

---

॥५२॥ वृक्षाची विलक्षण संतति । अंतरे विशेष असती । तोचि सजाति । भेद ह्मणवी ॥५३॥ पाषाणादिक जाति । जडमान आकृति । तो विजाति । भेद ह्मणवी ॥ ५४ ॥

## भेदनिराकरण.

ओव्या–ते सद्रूपब्रह्म गगन ऐसें । निरवयव होऊनि असे । ह्मणउनि सत्तासि अनेक विशेषें । सत्ता नाहीं ॥५५॥ त्या कारणें प्रसिद्ध । स्वगतभेद सजातीय भेद । सद्ब्रह्मीं हा द्विविध । भेद नास्ति ॥५६॥ परि जगत्कारण । माया असे आपण । विजाति भेद ह्मणोन । कैसें नास्ति ह्मणावें ॥५७॥ तरी लोकांत चित्रक। चित्रशक्तिसि पृथक । भिन्न दिसणें विशेख । ह्मणतां न घडे ॥५८॥ तैसें सन्मात्र सन्निध मायेसि । विलक्षण नाहीं सदा सेवेसि । ह्मणोनि विजातिभेद ब्रह्मासि। नाहीं जाणावें ॥५९॥

## सिद्धान्तश्रुति.

ओव्या–या अर्थासि दृष्टांत वाहे । उभारूनि एकमेवाद्वितीये । ब्रह्म ह्मणोनि अतिशयें । श्रुतिवाक्यें ॥ ३६०॥ एकमेवाद्वितीय । निश्चये पदकृति । तयासि ऐक्य

त्यर्थवाक्ये एकमेवाद्वयमिति पदत्रयस्यैक्यमवधारणं द्वैतनिषेध इति इत्यर्थत्रयसद्भावेन क्रमेण ब्रह्मणि स्वगतसजातीयविजातीयभेदत्रयराहित्यप्रामाणिकमिति सिद्धं ॥

## अध्यारोपविवेकः

अनंतरमध्यारोपापवादौ कल्पितद्वयं तस्मिन्विद्यमानरज्जुशुक्तिस्थाण्वादिष्वविद्यमानाहिरजतचोरादिकल्पनावत् सद्रूपब्रह्मण्यविद्यमानमायादिकल्पनाध्यासः । अध्यारोपो भवति ॥

## अपवादविवेकः

अनंतरं योऽहिः सा रज्जुः यद्रजतं सा शुक्तिः यश्चोरः स स्थाणुः इतिवद्विचारमुखेन प्रपंचः सर्वोऽपि मिथ्या ब्रह्मैव सत्यं मायासान्निध्येन यज्जगज्जन्मस्थेमभंगकारणं तद्ब्रह्मेत्यपवादः ॥

## ब्रह्मलक्षणविवेकः

अनंतरमेतद्व्यावृत्तिलक्षणतटस्थलक्षणस्वरूपलक्षणानि दृग्रूपवस्तुसाक्षात्कारस्य उपायत्रयं तेषु देहमनःप्राणेंद्रियाद्यनात्मवर्गं नेतीति निषिध्यपरिशिष्टात्मानं प्रकाशयदेवातद्व्यावृत्तिलक्षणम् । भ-

---

स्थिती । निश्चयें अवधारणें ॥६१॥ द्वैतनिषेध । त्या कारणें अर्थ होय त्रिविध । ह्मणोनि परिक्रमे सिद्ध । ब्रह्माचे ठायीं ॥६२॥ स्वगत सजाति विजाति । ह्मणोन भेदत्रय नास्ति । हा अर्थ निश्चय स्थिति । प्रमाणसिद्ध ॥६३॥

## अध्यारोपविवेक.

ओव्या—आणिक अध्यारोपअपवाद । ह्मणजे हा द्विविध । कल्पित द्वयसिद्ध । त्याचे ठायीं ॥६४॥ सिद्ध रज्जुशुक्तिस्थाण्वादिक । तयासि नाहीं ते आणिक । अदिरजत चोर मुख्य । कल्पित जैसें ॥६५॥ तैसें सद्रूपब्रह्मीं विशेख । नाहीं तें अभासक । मायाप्रपंच कल्पनादिक । तो अध्यारोप ह्मणवी ॥६६॥

## अपवादविवेक.

ओव्या—मग हा सर्प नव्हे दोर । हें रजत नव्हें शुक्तिकाकार । हा चोर नव्हे स्थाणु साचार । ह्मणोनि ॥६७॥ विचार मुख्य प्रपंच । सकळ मिथ्या उंचनीच । ह्मणिजे ब्रह्मचि साच । तो अपवाद ह्मणवी ॥६८॥

## ब्रह्मलक्षणविवेक.

ओव्या—आणिक अतद्व्यावृत्ति लक्षण । तटस्थलक्षण स्वरूपलक्षण । ह्मणिजे दृग्रूपवस्तु साक्षात्कारासि कारण । उपाय त्रय ॥६९॥ त्याचे ठायीं देहाद्यनात्मवर्गी

वति । अतद्व्यावृत्तिर्नाम किं तद्ब्रह्मभिन्नदेहादिभेदः मिथ्यारूपोऽपि व- न्हिमति भ्रांतलिंगं यथा वह्निज्ञापकं तथायं ब्रह्मज्ञापकः शाखाग्रे चंद्र- मा इति शाखाग्रवर्तिचंद्रमसः शाखाग्रवृत्तित्वं तदवृत्तित्वमपि ज्ञाप- कम् आत्मावृत्तिभूतादिजगत्कारणत्वेनात्मा ज्ञाप्यत इति यत्तत्तटस्थ- लक्षणं भवति प्रकृष्टप्रकाशः सूर्य इत्यत्र प्रकृष्टप्रकाशोऽस्मद्भिन्नो यथा सूर्यज्ञापकः आत्मनिजस्वरूपज्ञापकं सत्यज्ञानानंदादिकं स्वरूपलक्षणं सत्यज्ञानानंदादिपदार्थानां परस्पराभेदज्ञानेन सत्यज्ञानानंदव्यावृत्तं ब्र- ह्मेति लभ्यते ॥

## पंचलक्षणीविवेकः

अनंतरं। सत्यज्ञानानंदनित्यपरिपूर्णपदार्थपंचकमात्मनः स्वरूपलक्ष- णं तस्मिन्नजाने जानेऽविदिषमित्यादौ कामादिवृत्तिभानेऽभाने जाग्र- दाद्यवस्थासु सर्वेषु कालेषु बाधाराहित्येन वर्तते यत्तत्सद्रूपं त्रिका- लाबाध्यत्वं सत्वं त्रैकालिकनिषेधप्रतियोगी मिथ्या तदप्रतियोगी सत्वं नन्विदं रजतमिति भ्रमानंतरं नेदं रजतमिति बाध्यतया प्रतीयमानं शुक्तिरजतादिकं मिथ्या प्रपंचस्य बाधप्रतीत्यभावात् कथं मिथ्या- त्वमिति चेदिह ब्रह्मणि नानानेतीत्यादिश्रुत्या बाधितत्वात् प्रपंचस्य मिथ्यात्वात् तदन्यद् ब्रह्म सत्यं सर्वास्ववस्थासु स्वात्मन्यध्यस्तावि- द्या तत्कार्यतदधीनवस्तुविषयकप्रकाशरूपं चिद्रूपं तच्च कालत्रयेऽप्य- वृत्तिचैतन्यं नास्ति न प्रकाशत इति व्यवहारयोग्यं परमप्रेमविषय-

---

नेति । मुखें निरसुनि आत्म्याप्रति । जाणणें जाणवि जें तें अतद्व्यावृत्ति । लक्षण ह्मणवी ॥३७०॥ शाखाग्रीं चंद्र असे ह्मणोनिया । भूतादिजगत्कारणत्वें आत्मया। जाणिव जाणविजे अतिशया । तें तटस्थ लक्षण ह्मणवी ॥७१॥ प्रकृष्टप्रकाशरू- संविति । ह्मणोनि आत्म्याचि निजरूप स्थिति । यथाजाणवि जे अंतीं । तें स्वरू- पलक्षण ह्मणवी ॥७२॥

## पंचलक्षणीविवेक.

ओव्या—आणिक सच्चिदानंद । नित्य परिपूर्ण विशेध । ह्मणिजे इति पंचविध। आत्मस्वरूपलक्षण ॥७३॥ त्याचे ठायीं । नेणें जाणोन न जाणिलें ह्मणें । कामा- दिवृत्तिचेनि गुणे । दिसणें नं दिसणें । तयेठायीं ॥७४॥ जाग्रदाद्यवस्थेच्या ठायीं। आपणासि एक बाधा आहे नाहीं । ह्मणवणे तया तेंहि । साक्षितें सद्रूप ह्मणवि ॥७५॥ सर्व अवस्थेंत । विषय अनुस्यूत । प्रत्यक्ष जाणणें समस्त । तें चिद्रूप ह्म-

त्वमानंदस्वरूपत्वं स च चिद्रूप आत्मा आनंदस्वभावः परप्रेमास्पदत्वात् यन्नैवं तन्नैवं यथा दुःखं सदोदितमेव नित्यस्वरूपं निवृत्तिशून्यमिति यावत् नाशरहितमिति फलितं सर्वार्थसाधकत्वेन सकलव्यावहारिकप्रातिभासिकवस्तुसंबंधित्वं परिपूर्णत्वं ॥

## आनंदविचारः

अनंतरमत्र आत्मा सच्चिदानंदस्वरूपो भवति सर्वास्ववस्थासु सच्चिद्रूपवदानंदस्वरूपस्याभिव्यक्तिर्भवितव्या सा नास्तीत्यात्मा कथमानंदस्वरूप इति अत्रोच्यते उष्णप्रकाशीभूतदीपस्य प्रकाशो गृहं व्याप्य वर्तते । उष्णस्य व्याप्तिर्नास्ति। उदके उष्णस्पर्शः प्रकटितो भवति प्रकाशस्य प्रकटिता नास्ति काष्ठेतूष्णस्पर्शभास्वररूपप्रकाशयोः प्रकटितास्तीतिवत् पाषाणादिरस्तीति सत्ता प्रकटितास्ति सच्चिदानंदयोर्बुद्धेस्तमोगुणेनाज्ञानमयमूढवृत्तौ रजोगुणेन रागमयघोरवृत्तौ सच्चिद्रूपयोर्द्वयोः स्पष्टतां विनानंदस्वरूपस्य स्पष्टता न घटते सत्वगुणेन वैरा-

---

णवी ॥७६॥ परम प्रीतीकारणें । विषय होणें । ते ह्मणवी आपण । आनंदरूप ॥७७॥ संततोदित । सांद्रानंद अखंडित । होऊनि असे नित्य । स्वरूप ह्मणवी ॥७८॥ सर्वार्थसाधक होणें । सर्वसंबंधित्वपणें । तें ह्मणवी आपण। पूर्णरूप ॥७९॥

## आनंदविचार.

ओव्या—आणिक येथें आक्षेप । सच्चिदानंद आत्मस्वरूप । होय तरी सद्रूपाचिद्रूप । ऐसें सर्व बुद्धीचेठायीं ॥३८०॥ आनंद अभिव्यक्त । होऊनि दिसावा उदित । तरी तो यथायुक्त । नसे कीं निमित्यें ॥८१॥ तरी आनंदरूप । नव्हे आत्मस्वरूप । ह्मणती त्यासि परिहरसंक्षेप । दृष्टांतें करुनी ॥८२॥ उष्णप्रकाशरूप दीपक । मंदिरांत विजृंभक । परि प्रकाशव्यापक । उष्णव्यापक कां नसे ॥८३॥ उदकाचे ठायीं विशेष । उष्ण प्रकट असे । प्रकाश कां नसे । प्रकट होऊनि ॥८४॥ काष्ठांतरीं सरिसें । उष्ण प्रकाश उभय असे । परिते कां नसे । प्रकट होऊनि ॥८५॥ पाषाणाचे ठायीं सद्रूप ब्रह्म । अभिव्यक्त असे सम । चिदानंदासि क्षेम । अभिव्यक्ति कां नसे ॥८६॥ तैसें बुद्धिज्ञानमय स्फटिकनीति । तमोगुणें मूढ वृत्ति । रजोगुणे रागमय अति । घोरवृत्ति वसे ॥८७॥ सच्चिद्रूप उभयातें । स्पष्टत्व नाहीं निरुतें । आनंदासि कदाचितें । स्पष्टत्व नाहीं ॥८८॥ सत्वगुणें वैराग्यमय ॥ शांतिवृत्तीनें अतिशय । सच्चिदानंद ह्मणवी जे त्रय । रूपासि स्फुरण होय

ग्यमयशांतवृत्तौ सच्चिदानंदस्वरूपत्रयस्य स्फुरणमस्तीत्यनेनानंदात्म-
रूपो भवति ॥

## सत्तास्वरूपविवेकः

अनंतरं क्रमेण पंचस्वरूपाणामुपाधिभेदः कथमत्र वक्ति व्याव-
हारिकसत्ता प्रातिभासिकसत्ता पारमार्थिकसत्तेति तिस्रः सत्तास्ता-
सु घटादीनां सत्ता विदेहकैवल्यपर्यंतं सुषुप्तिमूर्च्छाद्यवस्थासु अज्ञाता
सती पुनरुत्थाय पश्यति चेत् पूर्ववत्प्रभातीति यत् सा व्यावहारिकसत्ता
॥प.॥ अज्ञानभिन्नदोषाच्च चिद्भिन्नं दृश्यतायुतम् ॥ व्यावहारिकसत्ता-
क इति शास्त्रेषु निश्चितम् ॥ शुक्तिकारजतस्वप्नदृष्टविषयादीनां स-
त्तैव प्रतीतिकालं विना प्रबोधानंतरं पुनरनुभूयमानस्वप्ने असती या
सा प्रातिभासिकसत्ता। प्रतीतिकालमात्रे वर्तमानजडं प्रातिभासिकम्
अज्ञानभिन्नदोषजन्यमिति यावत् समस्तकल्पनाया अधिष्ठानभूताऽदृ-
श्याविलयसहितब्रह्मणः सत्तैव पारमार्थिकसत्ता ॥

## चिद्रूपोपाधिभेदः

पुनर्जीवेश्वरकूटस्थब्रह्माणि चिदश्चतुर्विधाः येषां घटजले प्रतिबिं-

---

॥८९॥ ह्मणोनि आनंदरूप। होय आत्मस्वरूप हें निश्चयरूप। प्रसिद्धीं प्रति-
जाणावें ॥ ९० ॥

## सत्तास्वरूपविवेक.

ओव्याः—आणिक अनुक्रमें विशेष। पंचस्वरूपासि विविध। उपाधि संबंधभेद
कैसा ह्मणतिला तरी ॥९१॥ व्यावहारिकसत्ता। प्रातिभासिकसत्ता। पारमार्थिक
सत्ता। ह्मणोनि सत्तात्रय ॥९२॥ त्याचेठायीं। जाग्रतींत घटादिगत सत्ता। वि-
देह कैवल्यपर्यंत। सुषुप्तिमूर्च्छादि अवस्थायुक्त। होऊनि दिसे ॥९३॥ म-
चेवोनि पाहिलें तरी विशेख। प्रथम ऐसें दिसतसे मुख्य। त्यालागीं व्यावहारिक
सत्ता ह्मणवी ॥९४॥ शुक्तिरजताकार स्वप्न विषय दिसत। ते सकाळीं सत्यप्रबो-
धि असत। त्याकारणें प्रातिभासिक सत्ता। ह्मणवितसे ॥९५॥ समस्त कल्पनेचे
अवरिक। होऊनि अधिष्ठानकारक। अदृश्याविलय ब्रह्म तें परमार्थिक। सत्ता
ह्मणवी ॥ ९६ ॥

## चिद्रूपोपाधिभेद.

ओव्या—अणिक जीव ईश्वर। कूटस्थब्रह्म विविधाकार। इति चतुर्विध प्रकार
चित्ताचे भेद ॥९७॥ त्याचें ठायीं। जळांत प्रतिबिंबिताकाश। घटमठअवच्छिन्ना-

वितसाभ्रनक्षत्राकाशं मेघांशतुषारजले प्रतिबिंबितनिमित्ताकाशं घटावच्छिन्नाकाशमहदाकाशे क्रमेण चतुर्विधाः दृष्टान्ताः ॥

## आनंदोपाधिभेदः

आनंदोऽष्टविधः ॥ पद्यम् ॥ विषयानंद एवाद्यो ब्रह्मानंदस्ततः परम् । वासनानंद एवासौ मुख्यानंदस्तथैव च ॥ निजानंदो महानात्मानंदाद्वैतसुखात्मकौ । विद्यानंद इति प्रोक्ता ह्यष्टौ वेदेषु विश्रुताः ॥ तेषु वनितादिविषयलाभे सति प्रतीयमानानंदः विषयानंदो भवति निद्रासमयेऽनुभूयमानानंदो ब्रह्मानंदो भवति नन्विंद्रियमनोव्याप्तेरभावात् सुषुप्तौ कथं ब्रह्मानंदानुभवः कथं वा सुषुप्त्यपगमे सुखमहमस्वापं न किंचिदवेदिषमिति स्मृतिरिति श्रृणु । अंतःकरणवृत्तिलक्षणानुभवाभावेऽप्यविद्यावृत्तिविशिष्टसाक्षीरूपानुभवस्य सत्वान्नानुभवानुपपात्तिः न स्मृत्यनुपपत्तिः निद्रापगमक्षणे स्मर्यमाणानंदो वासनानंदः हानोपादानद्वयं विना उपेक्षाबुद्धौ सत्यां प्रतीयमानानंदः मुख्यानंदः योगाभ्यासेन मनोविलये सति भासमानानंदः निजानंदो भवति प्रियवनितादिविषयाणां मध्ये स्वयमेव प्रियतम इति प्रकाशे सति प्रकाशमानानंदः आत्मानंद इति व्यपदिश्यते नामरूपप्रपंचो मिथ्येति स्वरूपज्ञप्तिमात्रं सत्यमिति विवेके प्रतीयमानानंदः अद्वैतानंदः जीवब्रह्मैक्य-

---

काश । महदाकाश । ह्मणिजे इति ॥९८॥ अनुक्रमेंचतुष्कें । दृष्टांतमुखें । ह्मणवी विशेष । चित्त चतुर्विध ॥९९॥

## आनंदोपाधिभेद.

ओव्याः—आणिक विषयानंद । ब्रह्मानंद वासनानंद । मुख्यानंद निजानंद । आत्मानंद ॥४००॥ अद्वैतानंद विद्यानंद । ह्मणोनि आनंद अष्टप्रकार भेद । त्याचे ठायीं ॥१॥ वनितादि विषय कूटवशें । धनसंपत्ति लाभाध्यासें । प्रकटोनिया दिसे तो विषयानंद ॥२॥ विषयइंद्रियकरण । कारणांतर्गत होऊनि मग्न । सुषुप्ति साक्षित्वें दिसे पूर्ण । तो ब्रह्मानंद ॥३॥ निजोनिया चेतें । तत्क्षणें पूर्वविषयातें । अतिशयप्रवर्ते । तो आपण सर्वथा वासनानंद ॥४॥ हानोपादान नास्ति । उपेक्षा रागरति । बुद्धींत दिसे मोद अति । तो मुख्यानंद ॥५॥ अष्टांग योग अभ्यासें । वळेंकरूनि कर्मवशें । मनोलयांत दिसे । तो निजानंद ॥६॥ प्रिय वनितादिवस्तु विषयींकरणें । मध्येप्रियतम आपण । ह्मणोनि जाणणें । तो आत्मानंद ॥७॥ ना-

वतेति मीमांसा शास्त्रानिश्चितं ॥ कुतो ब्रह्म कुतो देवा वैषम्यादिप्रसंगतः ॥कर्माणि ये च कुर्वन्ति निषिद्धान्यपि सर्वदा ॥ तेषां निरंतरं स्वर्गो मोक्ष इत्युच्यते बुधैः । निषिद्धकर्माचरणान्नारकीगतिरेव हि । अपूर्वभावनाबोधिनिगमा इति निश्चयः ॥ यद्वाहो पूर्वकार्यत्वात्तद्युक्तं बोध्यते च तैः ।ब्रह्मैव बोध्यता वेदवेदान्तेषु न युज्यते । वयं ब्रूमस्तत्र युक्तिरपूर्वत्वात्तु बोध्यते ॥ सर्वैर्वेदान्तवचनैरुपक्रान्तादिलिंगतः ॥ निष्फलत्वात्कथं बोध्यं भावनाकार्यशून्यतः । शुद्धे ब्रह्मणि संबोध्ये निर्गुणे सद्धने शिवे ॥ अनर्थानां निवृत्तिस्तु फलं वेदान्ततो भवेत् । अपूर्वभावना गम्या ह्यज्ञातं वेति संशये । अपूर्वं कार्यमित्युक्ते गौरवादिप्रसंगतः । लाघवेनापूर्वमात्रं सफलं वेदबोधितं ॥ इति वेदान्तगम्योर्थो कर्मकांडार्थभेदवान् । निश्चीयते बुधैः सर्वैर्वेदान्तादिविरोधितः । प्रतिपत्तिविधातारो ब्रह्मण्यवशिता उत॥वेदत्वात्ते विधातारो वेदान्ता अखिला अपि। मननादेर्विधानाच्च तत्रब्रूमो वयं मुदा । प्रतिपत्तिर्विधेया न वाक्यार्थज्ञानतावशात् । अग्निहोत्रादिवाक्यार्थज्ञप्तिसाम्यसमन्विता । अजाध्यित्वादग्निहोत्रावाक्यार्थज्ञानमीदृशम् । शाब्दं सद्ब्रह्मविज्ञानं विधेयं भवति ध्रुवम् । इति चेन्न प्रमाणादिपारतंत्र्येण तत्कथं॥ विधेयं नेति विज्ञेयमिच्छाधीनत्वनिग्रहात् । अनिच्छकोऽपि गमिनो दुर्गंधज्ञानसंभवात् । ज्ञानं विधेयं सच्छास्त्रकर्तृणां संमतं नहि । अखंडार्थं बोधयन्ति वेदान्तवचनानि हि । संसर्गागोचरज्ञानजनितानि न संशयः ॥ तत्रैकप्रातिपदिकगम्यार्थप्रतिपादकाः । एकं यत्प्रातिपदिकं तदर्थस्थं वचोऽखिलं । सत्यज्ञानादिपदगं संप्रश्नोत्तरभावतः । तन्मात्रस्थसहिता लक्षणोक्तिर्यथा तथा । प्रकृष्टैकप्रकाशोऽयं चंद्र इत्यादिवाक्यतः । असाधारणधर्मादेर्योगज्ञाने न संशयः । प्रश्नबीजमयस्तत्र निवर्त्य इति चेन्नहि । प्रकृष्टोऽयं प्रकाशोत्र स चेत्प्रत्यक्ष एव हि ॥ बुभुत्सित श्चंद्रभेदश्चंद्रश्चंद्रभिदान्वितः । इत्येवं निश्चयेनैव तदर्थत्वं न युज्यते । नामार्थं न विजानन्तीत्येवमेव हि कल्पना । दृष्टान्तश्चंद्रतायोगो बोध्य इत्यत्र

---

सहकार । सुटिकेसि योग्य ॥७३॥ अशास्त्ररूप तीव्र मंद । ह्मणिजे प्रपंच द्विविध। आत्मसाक्षात्कारासि विरोध । होऊनि असे ॥७४॥ ह्मणोनि तया कारणें । ज्ञानाभ्यासासि आक्षेपणें । प्रथम अनादरणें । तें जावया योग्य ॥७५॥ आणिक ते इतर । आत्मसाक्षात्कार । झालियानंतर । वरि विशेष ॥७६॥ मोक्षा सिद्धार्थ

तद्यथा। ब्रह्मत्वयोगो बोद्धव्य इति चेदत्र भण्यते। ब्रह्मत्वं सर्वदृश्यानां संबंधाश्रयतैव हि। तमेवैकमितीत्युक्त्वा ह्यन्यज्ञाननिषेधनात्। लाघवादेकविज्ञानात्सर्वानर्थनिवृत्तितः। गुणब्रह्माभेदवादिमते तद्योगबोधनं॥ सामानाधिकरण्येन दुर्लभं मानहानिगं॥ धर्माणां धर्मिणश्चापि संबधादेरभेदतः॥ विशेषभेदो नास्त्यैव तस्मादपि न संभवि। सर्वज्ञत्वादिगुणिनो भेदवादरतस्य हि॥ क्षित्यादिकार्यलिंगेन तद्बोधो भवतीत्यतः। जीवभिन्नं ब्रह्मबोध्यं तत्सर्वं लौकिकं यतः।

## उपाधित्रयम्

॥ वृ ॥ सुप्तौ वेद्या ह्यविद्या तदनुजवरधीस्तच्च दुःखादियोगावच्छिन्नोपाधिराद्याप्रतिफलितयुतोपाधिरूपाद्वितीया॥ तार्तीयोपाधिरूपस्स इति सुविदितः प्रत्यगात्मोपयुक्त्यै चाध्यासोनाम तस्येतरमतिरमितान्यत्र तद्धर्मबुद्धिः॥

## अध्यासलक्षणम्

सोध्यासः मिथ्याध्यास इति इतराध्यास इति इतरेतराध्यास इति

---

होऊनि। सुटिके लागुनी। योग्य ह्मणवुनि। रहस्यार्थ जाणिजे * ॥७७॥

## उपाधित्रय.

ओव्याः—यानंतर अवछिन्नोपाधि। प्रतिबिंबोपाधि। अध्यासोपाधि। ह्मणोनि उपाधित्रय ॥७८॥ त्याचे ठायीं प्रत्यगात्मयाते। सुषुप्तिरूप अविद्या तें। ह्मणवी निरुतें। अवछिन्नोपाधि ॥७९॥ तत्कार्यें बुद्धिच्या आंतु। आत्मा प्रतिफळितु। तेंचि ह्मणवितु। प्रतिबिंबोपाधि ॥६८०॥ तये बुद्धिगते। सुखदुःखादि आत्मयाते। आरोपणतें अध्यासोपाधि ह्मणवी ॥८१॥

## अध्यासलक्षण.

ओव्याः—तें नव्हें तरि आणिक। तयाचे ठायीं विशेख। अस्तिबुद्धि मुख्य।

---

*जीवेश्वर कल्पित प्रपंचद्वयासी। शुद्ध शिव साक्षात्कारें सोडुनी तयासी। कस्तूरिकारहित करंडवत तैसी। वासना मात्र राहे ॥१॥ तद्वत प्रपंचाकार भासक। चिदाभास भ्रांतिवासनामात्रक। जीवन्मुक्त होतांचि सकळक। विदेह कैवल्यपर्यंत ॥२॥ अनिवार्य होऊनिया। नंतर आपणाचि नष्ट होऊनिया। स्वेतर ज्ञप्तिशून्य। स्वज्ञप्तिशुद्धानंद ॥३॥ नित्यपरिपूर्णता। हेंचि निर्वाणता। रहस्यार्थ तत्वतां। निश्चयें जाणा ॥४॥

(या ओव्या कानडी पुस्तकाच्या आधारें केल्या आहेत).

सत्याध्यास इति प्रकारचतुष्टययुक्तो वर्तते । तेष्वग्निसंपर्केण जलस्य दाहकर्तृत्ववत् प्रत्यगात्मसंनिधानेन क्रमेण गंतृत्वद्रष्टृत्वचिंतकत्वज्ञातृत्वलक्षणशक्तिमत् स्थूलशरीरं च मिथ्याध्यास इत्युच्यते ॥ स्थूलशरीराभेदाध्यासेनाहं गच्छामीत्यादिशरीरधर्माध्यासः । प्रत्यगात्मनींद्रियवर्गः । इतराध्यास इत्युच्यते अंतःकरणमितरेतराध्यास इत्युच्यते मूलाहंकारः सत्याध्यासो भवति । अनंतरमहमिति प्रतीत्य प्रत्यगात्माहंकारयोः रज्जुसर्पवन्निरुपाधिकाध्यास इत्युच्यते अहं कर्तेत्यनेनाहंकारधर्मात्मनोः रक्तस्फटिक इतिवत् सोपाधिकाध्यास इत्युच्यते। इच्छास्म्यहमित्यनेनांतःकरणधर्मात्मनोः प्रवाहजलप्रतिफलितपतंगप्रतिबिंबवत्तद्धर्माध्यास इत्युच्यते कुटुंबवानहमित्यनेन आत्मपुत्रादेश्चित्रस्थव्यवहारवत्संबंधमात्राध्यास उच्यते । एवं प्रकारेणाध्यासेनैव निर्विकारभूतात्मना संसारकल्पना भवति । तत्र पुत्रदारादिसाकल्यवैकल्येन सकलोऽहं विकलोऽहमिति बाह्यधर्मानात्मन्यध्यस्य स्थूलोऽहं कृशोऽहं गच्छामि लंघयामि शरीरतद्धर्मादिकमध्यस्य काणोहं मूकोहं बधिरोहमितींद्रियधर्मानध्यस्य कर्ताहं भोक्ताहमित्यंतःकरणधर्मानध्यस्येतरेतराविवेकेनान्योन्यस्मिन्नन्योन्यधर्मानध्यास्यान्योन्याभेदमप्यध्यस्याहमिदं ममेदमिति नैसर्गिकव्यवहारसंपन्नो मनोवृत्तिरवध्येंद्रियहयसंगम्यमानशरीरस्यंदनमारुह्य प्रत्यगात्मा महारथो नानाविध-

---

ते ति आपण ॥ ८२ ॥ शुक्तिकारजत दृष्टांतन्यायें । अध्यासलक्षण होय। तो अध्यास कैसा काय । ह्मणतिला तरी ॥ ८३ ॥ मिथ्याध्यास । इतराध्यास । इतरेतराध्यास । आणि सत्याध्यास । ह्मणोनि चतुर्विध असे ॥८४॥ त्याचे ठायीं । अग्नीचेनि । संयोगें करूनि । उदका लागुनि । उष्णत्व जैसें ॥८५॥ तैसें प्रत्यगात्मा संनिधानें । चेतनानुक्रमानें । गमनागमन देखणें । आठव करणें ॥८६॥ जाणिवशक्ति विशेष । असे स्थूल शरीरास । ह्मणोनि तो मिथ्याध्यास। ह्मणवितसे ॥८७॥ इंद्रियवर्ण परिकर । सकळ संमोहविस्तार । तो आपण इतर । अध्यास ह्मणवी ॥८९॥ आणिक अहंप्रथमाध्यासें मुख्यें । प्रत्यगात्म्यासि अहंकारें विशेष । रज्जुसर्पन्यायें निरुपाधिक । अध्यास ह्मणवी ॥९०॥ अहंकर्ता ह्मणवी तेणें । अहंकार धर्म आत्म्या कारणें । रक्तस्फटिक न्यायानें । सोपाधिक ह्मणवी ॥९१॥ इच्छाम्यहं ह्मणवी आपण । ह्मणोनि तया कारणें । अंतःकरण । धर्म आत्म्यासि ॥९२॥ प्रवाहरूपमय । जीवनांत पतित सूर्य । प्रतिबिंब न्यायें।

विषयदेशाक्रमणचतुरः तद्धि लभ्य नानाविधफलभोगान् भुक्त्वा मूर्धन्यः सन् रमते स्वाश्रयत्वायोग्याश्रये प्रतीयमानत्वमध्याससामान्यलक्षणं प्रातिभासिकाध्यासस्याविद्यातिरिक्तदोषजन्यत्वे सति प्रतीयमानत्वं लक्षणं यद्वा । अज्ञातगोचरवृत्त्यनुपहितगोचरेदमाकारवृत्त्योपहितचैतन्यनिष्ठत्वे सति प्रतीयमानत्वं वा अविद्यातिरिक्तदोषजन्यत्वं वा लक्षणमिति निष्कर्षः ॥

## पंचावस्थाः

पुनर्जागरणस्वप्नसुषुप्तितुर्यतुर्यातीता इति पंचावस्थाः। तासु स्थूलभूतदशेंद्रियप्राणपंचकांतःकरणचतुष्टयरूपचतुर्विंशतितत्त्वात्मकस्थूलशरीरे सत्वगुणाकाराक्षरविष्ण्वधिदेवताकलोचनस्थानहृदयकमलाष्टदलगतिर्भिर्विश्वात्मा जीवः विराट्संज्ञिकेश्वरश्चैकीभूत्वा वनितादिविषयभोगं सकलकरणसामग्र्याऽनुभवन्विद्यत इति यत्सा जाग्रदवस्था। पुनस्तच्चतुर्विंशतितत्त्वमध्ये स्थूलभूतानि पंच चित्तबुद्धी द्वे परित्यज्य शिष्टसप्तदशतत्त्वरूपसूक्ष्मतनौ रजोगुण उकाराक्षरो ब्रह्माधि-

---

तद्धर्मताध्यास ह्मणवी ॥९३॥ कुटुंबवानहं ह्मणवी ह्मणोनि । आत्मा पुत्रादिकालागुनी । मैत्रस्थ व्यवहार न्यायें करूनि । समंध मात्राध्यास ह्मणवी ॥९४॥ इति अध्यासे निर्विकार । आत्म्यासि संसार । कल्पित साचार । निश्चये जाणिजे ॥९५॥

## पंचावस्था.

ओव्याः—आणिक जाग्रत स्वप्न सुषुप्ति । तुरीया तुरीयातीत इति । पंचअवस्थाप्रति । त्याचे ठायीं ॥९६॥ पृथ्व्यादि पंचभौतिक । दशइंद्रियें प्राणपंचक । अंतःकरण चतुष्क । ह्मणिजे इति ॥९७॥ चतुर्विंशति तत्वात्मक । समूह मिळोन अशेष । ह्मणवी स्थूल देह कंचुक । आत्मसंन्निधानें ॥९८॥ स्थूलशरीरावस्था जाग्रती । विश्वाभिमानी नेत्रस्थानस्थिति । युक्तभोग क्रिया शक्ति । सत्वगुण ॥९९॥ विष्णुअधिदेवति ब्रह्माअधिपती । अकार मातृका इति । हृत्कमळांत दक्षिण गति । विराट संज्ञा ॥७००॥ अनादीश्वर संयोगें । वनितादि विषयभोगें । सकळ कारण योगें । सामुग्रीनें ॥१॥ असे अनुभवित रति । तो जीवात्मा परिमिति । अवस्था जाग्रती ह्मणवीतसे ॥२॥ आणि इंद्रियदशक । मनोहंकार प्राणपंचक । मिळोनि सप्तदशक । सूक्ष्म शरीर ह्मणवी ॥३॥ लिंगदेह अवस्था स्वप्न । तैजस अभिमानी

देवताकंठस्थानहृत्कमलकर्णिकागतिभिस्तैजसजीवः सूत्रात्मकसंज्ञिते-श्वरैकीभूतः सन् जाग्रद्वासनाविषयभोगं मनोरूपकरणेनानुभवन्नास्त इति यत्सा स्वप्नावस्थेत्युच्यते पुनः परितः कणकवलान्स्वीकुर्वन् शिशून् समस्तान् स्वपक्षच्छायायां संस्थापयित्वा एकस्थाने निद्रां प्राप्तचरणायुधवत् तत्समस्तकार्यमंतःस्थापयन् तत्संस्कारसहिते आत्माश्रयेऽवस्थाराहित्येन विद्यमानप्रकृतिरूपकारणदेहतमोगुणमकाराक्षररुद्राधिदेवताकः हृदयस्थानतत्कमलकर्णिका मध्यगतिभिः प्राज्ञजीवः अंतर्यामिसंज्ञितेश्वरश्चोभौ एकीभूत्वा ब्रह्मानंदविषयभोगं मायावृत्तिरूपसूक्ष्मकरणेनानुभवन् विद्यत इति यत्सा सुषुप्त्यवस्था भवति। अनंतरमेतज्जाग्रताद्यवस्थानामवस्थात्रयधामत्रयस्थानत्रयपुरत्रयरूपाव-

---

कंठस्थान । परियुक्त भोग रजोगुण । इच्छाशक्ति ॥४॥ ब्रह्माविष्ण्वाधिदेवतामातृका उकार । हृदयकमलकर्णिका अंतर । गति उत्तरे निरंतर । हिरण्यगर्भ संज्ञा ॥५॥ ईश्वरसंयोगें जाग्रदादिवासना। परि विचित्र विषयभोगरचना। मन तेंचि कारण । होऊनिया ॥६॥ अनुभवित असे । तो अंतरात्मा उभयोपाधिवसे । ह्मणवी विशेषें । स्वप्नावस्था ॥ ७ ॥ आणिक जैसें चरणायुधयुगळीं । पक्षिआपुलिया सकळीं । सकुटुंबेसिसमेळी । पसरोनिचरे ॥८॥ मग तो कुटुंब पदार्थ । समूह आपुलिया पक्षांत । आच्छादुनि निवांत । निद्रा करी॥९॥ तैसें स्थूल शरीर । करणव्यापार । विषयवृत्त्यंकुर । आवरण सहित ॥७१०॥ लिंगशरीरपर्याय । भ्रांतिजनित कार्य । विक्षेपसहित विषय । सकळ गर्भीं करूनि ॥११॥ अंतःकरणीं होय लीन । अंतःकरण तामस गगन । आत्मसंयोगें करून। कारणशरीर ह्मणवी ॥१२॥ कारणशरीर अवस्था सुषुप्ति । प्राज्ञ अभिमानी हृदयस्थानस्थिति । आनंदभोग द्रव्यशक्ति । तमोगुण ॥१३॥ रुद्र अधिदेवता । मकार मातृका इति अर्थ । अंतःकरणांतर्गत । अव्याकृतसंज्ञा ॥१४॥ ईश्वरसंयुक्तें । आनंद विषयभोगांते । मायावृत्त्यनुमतें । अनुभवित असे ॥१५॥ गुहांतर पुरुषस्थिति । गोप्य परमात्मा अति । ती अवस्था सुषुप्ति ह्मणवीतसे ॥१६॥ आणिक शरीरत्रय । अवस्थात्रय। जीवत्रय । धामत्रय भोगत्रय । शक्तित्रय ॥१७॥ गुणत्रय अक्षरत्रय । पुरुषत्रय आत्मत्रय । भावत्रयादि तत्वकार्य । सकलमिती ॥१८॥ समूह गर्भीं करून। व्यापकत्वें मनोव्यापारादि लक्षण । असे सततोदित महाकारण। शरीर ह्मणवी ॥१९॥ महाकारण तनु अवस्था तुर्या । प्रत्यगात्मा अभिमानीया । मूर्धस्थान अतिशया। भोग आनंद अवभास ॥७२०॥ ज्ञानशक्ति शुद्ध सत्वगुण । ॐकार मातृका ईश्वर

स्था एव पर्यायनामयुक्ता भवन्ति पुनर्जाग्रदवस्थायां तत्कमलं त्यक्त्वा निर्व्यापारं मनः कृत्वा ब्रह्मस्वरूपं चिंतयन्नास्त इति यत्सा तुर्यावस्थेत्युच्यते मूर्च्छादिकमपि तुर्यावस्थेति ज्ञेयं आत्मनि मनोमग्नतया यस्य वर्तते सा तुर्यातीतावस्था पुनस्तास्ववस्थासु स्थावरस्य सुषुप्तिः पशूनां स्वप्नसुषुप्ती देवतानां निरंतरजागरणम्।मनुष्याणामवस्थात्रयम्। अपस्मारिणां तुर्यावस्था वरयोगीश्वराणां तुर्यातीतावस्था भवति। तन्मध्ये आद्याः तिस्रोऽवस्था मनुष्याणां स्वयमेव भासमानाः संसारात्मिका भूत्वा वर्तन्ते शिष्टावस्थाद्वयं योगाभ्यासबलेनोत्पाद्य मुक्तिसाधनतया वर्तते।

## अवस्थामिथ्यात्वम्

पुनस्तास्ववस्थासु मध्ये एकस्यामन्यावस्था नास्तीति मिथ्याभूता भवन्ति तास्ववस्थासु सर्वेषु देशेषु सर्वेषु कालेष्वनुस्यूतः सन्नभ्यंतरं विना शुद्धज्ञप्तिरूपो निजतुर्यात्मा सत्यस्वरूपो भवति॥

---

अधिष्ठान। गति ऊर्ध्व प्रकाशमान। विंदु संज्ञा॥२१॥ सर्वसाक्षिक ईश्वरसंयुक्तें। अनुभवितअसे आनंदातें। तो संतत निर्मळात्मा निरुतें। तुर्यावस्था ह्मणवी॥ २२॥ आणिक लक्षणालक्ष। सबळ शुद्ध पक्ष। वाच्य लक्ष्यादिक। ऐसा विलक्षण॥२३॥ द्वैताद्वैत क्षराक्षर। प्रवृत्तिनिवृत्ति जीवईश्वर। साकार निराकार। विलक्षण॥२४॥ मायाअविद्या। त्वंपद तत्पद। अखिलभेद। विलक्षण॥२५॥ मनोवाचामज्ञ आप्रवेश। हकार निजरहस्य। तें तुर्यातीत अशेष। परब्रह्म सत्य॥२६॥ आणिक या अवस्थे ठायीं भिन्नता। स्थावरासि सुषुप्त्यवस्था। पशूंसि सर्वथा। स्वप्नसुषुप्ति॥२७॥ अवस्थात्रय मनुष्यासि। जागरणावस्था देवतासि। तुर्यावस्था-विशेषीं। अजान दैवतांतें॥२८॥ वरयोगी महंत। तयासि अवस्था तुर्यातीत। असे प्रकाशत। त्याचे ठायीं॥२९॥ प्रथम मनुष्याप्रति। आपोआप जाग्रत स्वप्न सुषुप्ति। दिसे ह्मणोन संसाररति। आत्मक होऊनि असे॥७३०॥ तुरीयातुर्यातीत। वर योगाभ्यास बळें जनित। ती या मुक्तिसी साधनहेत। होऊनि असे॥३१॥

## अवस्थामिथ्यात्व.

ओव्याः—आणिक तया अवस्थाविशेख। एकसारखी नाहीं एक। एकांत एक सेखीं। प्रगट नाहीं॥३२॥ ह्मणोनि काळ देश। नेमनेम्यक दृश्य। नाहीं तो अनाभास। तयाकारणें॥३३॥ मिथ्याभूत पदार्थ। त्याचे ठायीं वस्तु सत्य। चिन्मयअखंडित। आदिमध्यांत॥३४॥ सांद्रानंद निजतुर्यात्मक। आत्मास्फुरद्रूपें जाणें अशेख। तो आत्मा अपरोक्ष। साक्षात्कारी सत्य॥३५॥

## पुनरात्मसिद्धिः

जाग्रत्स्वप्नयोर्ज्ञप्तिर्वर्तत इति प्रसिद्धम् । तत्सुषुप्तौ ज्ञप्तिरस्तीत्यत्र सुषुप्त्युत्थानानंतरं सुखमहमस्वाप्सं न किंचिदविदिषमिति निद्राकालीनाज्ञानसुखद्वयस्मरणं सुप्तिकालीनानुभवमंतरा न संभवतीत्यर्थापत्तिप्रमाणेन सुषुप्तावात्मा समस्तघटादिरूपावरकांधकारं नेत्रं यथा पश्यति सकलशरीरादिकार्यावारकाविद्या तादृशाविद्यायाः सूक्ष्मवृत्तिषु चंचलतरुपल्लवांतरचंद्रिकालेशवत् क्षणमुद्भूताभिभूतनिजरूपानंदांशान् करणांतरापेक्षां विनाऽनुभवतीत्यनेन तत्र सुषुप्तौ ज्ञप्तिः स्थिरा भवति । अनंतरमहं किमप्यज्ञात्वा सुखेनास्वाप्समित्यस्य क्रमेण सविषयज्ञानं विना संसारदुःखनिवृत्तिं विना सर्वथा सुषुप्तौ अविद्यायाः साक्षिकानंदमय आत्मास्तीति चेत् कोऽपि तत्र जानामीत्येतत्केन कारणेन नास्तीति चेत् द्रव्यापेक्षणाय वाप्यां निमज्जकस्तस्य तद्द्रव्यमस्ति नास्तीत्येतदुत्थानमंतरा वक्तुं यथा न घटते तथा सुषुप्तौ ज्ञप्तिसद्भावेऽपि कालकर्मवशेन जाग्रदवस्थां प्राप्य करणसहकारसंपत्तिं विना तत्र स्वज्ञातार्थपरिभूषणं न घटते एवं सति सर्वावस्थासाक्ष्यात्मनः सच्चिदानंदस्वयंप्रकाशरूपत्वमनुभवसिद्धं भवति । आत्मनः सत्यत्वे किं प्रमाणम् । सत्यं ज्ञानं सुखं ब्रह्म अनंतं शिवमव्ययं इति श्रुत्युप-

---

### आत्मसिद्धि.

ओव्याः—आणिक येथें आक्षेप करूनि । जागरण आणि स्वप्नीं । जाणीव असे ह्मणोनि । जगप्रसिद्ध ॥३६॥ सुषुप्त्यवस्था दशें । जाणीव कैसा असे । तया कवण प्रमाण कैसें । ह्मणितलें तरी ॥३७॥ चेतना झालिया नंतरें । मीं कांहीं नेणें सुखभरे । निद्रित होतों हीं उत्तरें । स्मरण द्वय ॥३८॥ अनुभव जरि नाहीं नेणें। तरि सांगावया नुमजे बोलणें। ह्मणोनि अर्थापत्तिप्रमाणें। ते सुषुप्ति आत्मा जाणें ॥३९॥ जैसा गुहांतरिंतमी पुरुष असें । तयास इंद्रियकरणें सरिसें । परि दृश्यानुभूति नसे । जाणीव कांहीं ॥४०॥ इंद्रियकरण अपेक्षारहित । स्वप्रकाशें विद्युत्वें आपणांत । असे आनंद अनुभवित । तयादृष्टत्वें ॥४१॥ तैसा आत्मा देहादिकार्यासमस्त । व्यापकत्वें करूनि गर्भीकृत । तयाचक्षुन्यायें जाणत । असे सुषुप्ति ॥४२॥ चंचल तरुपल्लवांत विशेष । चंद्रकिरणपल्लवोपाधिवसें । प्रकाशें झळकत दिसे । जयापरी ॥४३॥ तैसे अविद्येचिये । सूक्ष्म वृत्तिचे ठायीं अतिशयें । निज स्वरूप

बृंहणानुसारेण तस्य सत्यत्वं आत्मा च मोक्षवादिभिः सर्वैर्नित्यसत्यस्वरूप इत्यंगीकर्तव्यः। न चात्माऽसत्यः पदार्थत्वात् शुक्तिरौप्यवदिति वाच्यं दृश्यत्वमत्रोपाधिः। आत्मा दृश्यः। सकलप्रपंचविषयकचित्त्वात् यन्मैवं तन्मैवं यथा प्रपंचादिरेतेन नैय्यायिकादिमतमप्यपास्तं। सर्वविषयकचिद्ब्रह्म न तु सर्वविषयकचिदाश्रयो गौरवात्। चिच्च सर्वभूतेषु प्रसिद्धैव सच्चिदानंदरूपः परमप्रेमास्पदत्वादयमप्यपरानंद इति श्रुत्युपबृंहणाच्च सुखवानात्मा सुखमात्मेत्यत्र लाघवात्सुखमेवात्माऽसंगोदासीनसच्चिदानंदात्मा स्वप्रकाशः प्रकाशत्वं नामवृत्त्यवच्छिन्नतदनवच्छिन्नचैतन्यावेद्यत्वं चैतन्यस्यैकत्वेन वेद्यवेतृत्वोभयासंभवादिति विचारेण सकलप्राणमनोधर्मतदध्याससाक्ष्यसंगोदासीनसच्चिदानंदपरशिवरूपाद्वयं ब्रह्मात्मेति सिद्धं भेदनिंदकश्रुत्यादिभ्यो जीव एव परमात्मेति सिद्धम्। अत एवागमेषु। देहो देवालयः प्रोक्तो जीवो देवः सदाशिवः। त्यजेदज्ञाननिर्माल्यं सोहंभावेन पूजयेदिति॥"लिंगे सुप्तिस्तु विज्ञेयेति" श्रुत्युपबृंहणाच्च तथा वामनपुराणे। श्लोकः॥तदाव्ययात्मा स हरिस्तद्हृत्पंकजशायिनं॥ दर्शयामास देवानां मुरारिर्लिंगमैश्वरं। सर्वप्राणिमनोमध्ये ईशानः सर्वभासकः॥ इति कठवल्ल्याद्युपबृंहणाच्च ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति एतादृशेशा-

---

चिन्मयें। विराजत असे ॥४४॥ करण सामग्रि अपेक्षा नसे। परि आनंद अंश विशेषें। अनुभवित असे। हें स्वानुभवसिद्ध ॥४५॥ ह्मणोनि जाग्रत्स्वप्न सुषुप्ति। सकळ अवस्था अनुभवी। जाणे जाणीव रूपें ज्ञप्ति। तुर्यात्मा ॥४६॥ आणिक मी कांहीं नेणें किंचित। सुखें होतों निद्रित। तयासि अनुक्रमें यथार्थ। विषयादिक ॥४७॥ नाहीं ज्ञानविशेख। संसार सुखदुःख। निवृत्ति अशेख। नाहीं तेथें॥४८॥ सर्वथा सुषुप्ति अंत मुख्य। झाला असे अविद्येसि साक्षिक। आनंदमय नादात्मक। ह्मणतिलें तरी ॥४९॥ कश्चित पुरुष विशेषें। तेथें सर्वथा देखिलें ऐसें। कवण प्रमाण असे। तयालागीं ॥५०॥ कोणीएक इष्टार्थ वस्तु। निमित्त बुडाला कुपोदकांत। तयावस्तु हातवसली परि मात। वरि सांगतां न घडे ॥५१॥ बाहेरहि रिघालिया। वाचुनिया तया। वृत्तांत सांगावया योग्य नाहीं ॥५२॥ तैसें सुषुप्ति भीतरीं। जाणीव असलें तरी। काळकर्मवशें परि। चेतोनिया ॥५३॥ करण सहाकारि सावयव। संयुक्तें तेथील जाणिव। जाणितला अनुभव। सांगावया

नादिशब्दबोधितप्रत्यग्ब्रह्मात्मैक्यं स्वयंज्योतिरिति सिद्धं पुमानत्र स्वयंज्योतिरिति श्रुत्युपबृंहणाच्च ॥

## पंचकोशविवेकः

अनंतरमन्नमयप्राणमयमनोमयविज्ञानमयानंदमया इति पंच कोशाः। तेषु मातापित्रोः शुक्लशोणिताभ्यां जातस्थूलशरीरमेवान्नमयकोश इत्युच्यते । सूक्ष्मतनौ प्राणमारुतकर्मेंद्रियाणि मिलित्वा प्राणमयकोश इत्युच्यते मनोज्ञानेंद्रियमिलितं मनोमयकोश इत्युच्यते प्रत्यगात्मचैतन्यछायया मिलितः लोहान्तकुंतोपमाहंकारः ज्ञानेंद्रियसहितः । विज्ञानमयकोश इत्युच्यते । कारणदेहरूपाविद्याजाग्रदवस्थायां वनितादिदुर्विषयदर्शनसामीप्यसंयोगैः क्रमेणोत्पन्नप्रियमोहप्रमोदा इत्येते त्रिविधा मिलिता इत्येतावानर्थ आनंदमयकोश इत्युच्यते ।

## अहंकारस्यात्मत्वखंडनम्

श्लोकः॥*विज्ञानमयकोशोऽहंकार एवात्मशब्दितः । आत्मानात्मविवे-

* विज्ञानमयकोशस्वरूपः अहंकार एव आत्मा अस्ति इति आत्मानात्मविवेकशून्यैः सोहमिति स्वानुभवप्रतीत्या उच्यते ।

घटे ॥५४॥ ह्मणोनि सर्वावस्थाशीं साक्षिकत्व । झालिया आत्म्यासि सत्यत्व । सच्चिदानंद स्वयंप्रकाश रूपत्व । अनुभवसिद्ध ॥५५॥

## पंचकोशविवेक.

ओव्याः—आणिक अन्नमय । प्राणमय मनोमय । विज्ञानमय आनंदमय । ह्मणोनि पंच कोश ॥५६॥ त्याचे ठायीं । पितृमातृचिया शुक्लशोणितें । जनित स्थूल शरीरतें । अन्नमय निरूतें । कोश ह्मणवी ॥५७॥ सूक्ष्म शरीरस्थानीं । वायुपंचक प्राणादिकरूनि । वागादि कर्मेंद्रियें मिळोनि । प्राणमय कोश ह्मणवी ॥५८॥ मन ज्ञानेंद्रियादिक । मिळोनि समूह अशेख । तो मनोमय मुख्य । कोश ह्मणवी ॥५९॥ प्रत्यगात्मा चैतन्य । चिच्छाया संयोगें करून । लोहकांतांतरकुंतन । न्यायें अहंकार ॥७६०॥ ज्ञानेंद्रियाचेनि । संयोगें करोन । विज्ञानमय निदानि । कोश ह्मणवी ॥६१॥ कारणदेहस्वरूप । अविद्यासंयोगें सामीप्य । जागृतींत वनितादिरूप । इष्टार्थदर्शनें ॥६२॥ उदित अनुक्रमें विशेध । प्रियमोदप्रमोद । इत्यादि मिळोन आनंद । कोश ह्मणवी ॥६३॥

## अहंकारात्मत्वखंडन.

ओव्याः—आणिक येथें विज्ञान । मय कोश आपण । अहंकार तो शून्य । आ-

केनं हीनैस्सोहंप्रतीतिकः ॥ उच्यते रोचते तन्न नीलोत्पलपदादिवत् - नीलं विशेषणं ज्ञेयमुत्पलं तु विशेष्यकम् । नीलाभिन्नं वेद्यमेव कृशोऽहमिति संविदिति सामानाधिकरण्येन शरीरं तद्विशेषणम् । आत्माविशेष्यभावेन श्रोता ध्याताऽहमित्यपि । इंद्रियाहंकृती तत्र प्रकारत्वेन बोधिते । आत्मा विशेष्यभावेन बोध्यस्तत्र प्रतीतितः । नन्वत्र विशेष्यतासंबंधेनावच्छेदसंबंधकनामार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रतीतंनामोत्तरसार्थकविभक्त्युपस्थितिकालीनतन्नामसमभिव्याहृतपदजन्योपस्थितिः कारणमिति वैय्याकरणमतरीत्या विशेष्यतासंबंधेनावच्छेदसंसर्गकनामार्थप्रकारकशाब्दबुद्धिं प्रति तन्नामसाकांक्षसार्थकविभक्त्यन्यतन्नामसमभिव्याहृतपदजन्योपस्थितिः कारणमिति नैयायिकनवीनमतरीत्या वा नीलोत्पलमित्यादौ अन्वयबोधो भवितुं योग्यः कृशोऽहमित्यादौ कृशत्वावच्छिन्नशरीरं आत्मा च ज्ञप्तिरूपः उभयोर्भेदाद्न्वयबोधः कथमिति चेत् अत्र उच्यते भेदप्रतिभानाभावकाले तथा विधान्वयबोधसंभवात् प्रत्यक्षे तु न किंचिद्बाधकं दोषजन्यबाधोदयात् समानविभक्तिकत्वमात्रेण नीलोत्पलादिदृष्टान्तः चतुर्विधसामानाधिकरण्येऽपि समानविभक्तिकपदसमभिव्याहारेणान्वयबोधः संभवति तथाहि अभ्यासे तु वा तवाबाधादैक्यं बाथ विशेष्यतेति मूलशास्त्रानुसारात् कृशोऽहमित्यादौ नाम स्थूलदेहेंद्रियाहंकाराद्यध्यासे सामानाधिकरण्यमेकं यश्चोरः सः स्थाणुरिति बाधायां सामानाधिकरण्यं यो जीवः तद्ब्रह्मेत्यैक्ये सामानाधिकरण्यं यन्नीलं तदुत्पलमित्यभेदेन विशेष्यविशेषणभावे सामानाधिकरण्यं तत्सामान्येनायं दृष्टान्तो नाम ब्रह्मेत्यादौ नाम ब्रह्मणो वस्तुतो भेदेऽपि उपास्त्यर्थं अध्यासिकाभेदावरणं तद्वदनाद्यज्ञानावरणादिवशात् स्थूलभेदाद्यभेदाध्यासात्मन्यहंकारो नाऽत्मा दृश्यत्वात् घटवत् अहंकारो नात्मा आत्मविशेषणत्वेन प्रतीयमानत्वात् कृशस्थूलदेहादिवदिति ॥

---

स्मानात्म विवेक ॥६४॥ तो अहंभावाचेनि । साभिमानें करूनि । अहमात्मा ह्मणऊनि । निश्चय करीतसे ॥६५॥ नीलोत्पलपुष्प ह्मणिजे तेथें । नीलगुण विशेष अभिमतें । विशेषनाम नीलोत्पल तें । सार्थक होय ॥६६॥ तैसें कृशोहंभाव स्थूलदेहासंयोगें । श्रुतोहंभाव इंद्रियायोगें । ध्याताहंभावप्रसंगें । अंतःकरण संबंधें ॥६७॥ प्रत्यगात्म्यासि निर्धार । अहंकार वेद्य साचार । ह्मणोनि अहंकार । आत्मा सत्य ॥६८॥

## अहंकारचैतन्यविवेकः

अनंतरम् ॥ तथा त्वचेतनीभूताहंकारस्य बाह्यविषयपरिज्ञातृत्वं कथमित्युक्ते सूचीशिलासंनिधानेन सूचीचेष्टावत् आतपे परिगृहीतदर्पणः कोणस्थान्धकारप्रकाशो यथा प्रत्यगात्मसंनिधानेन चैतन्यप्रतिबिंबः स्वस्मिन्विद्यत इत्यनेनापि जडीभूताहंकार एव बाह्यविषयज्ञातृत्वेन जाग्रत्स्वप्नयोः संचार्य सुषुप्तौ लीनो भवति निर्व्यापारो भवतीत्यर्थः तत्प्रपंचस्योपमानं किमित्युक्ते । अहंकारलयावस्थात्मकसुषुप्त्यंतः अविद्यात्मककोणान्तस्थभित्ति निद्रात्मकवाटं निष्कंपदीपरूपः स्वं । स्वयमेव प्रकाशयन् सन् वर्ततइत्येतत्प्रत्यगात्मज्योतिः । चूर्णिका । अनंतरं कालकर्मादिसमीरणसमूहप्रेरणसंपत्तिसंभारेण निस्तुलप्रस्तुततमस्तोमायमाननिद्राकवाटावरणोत्तरणे सत्यनंतरभाव्युच्चावचकार्यकारणमूलाविद्याप्रथमावस्थात्मकमहत्तत्त्वाकारदेहल्युपरि स्वीयमानसात्विकाहंकारमयस्फटिकमणिः जडानृताहंकारादिभ्यः प्रातिकूल्येन

---

### अहंकारचैतन्यविवेक.

ओव्याः—आणिक तैसें झालें तरी । चेतना झालिया वरि । अहंकार बाह्य विषयपरि । जाणावया तो समर्थ कैसा ॥६९॥ जैसें चुंबकाचेनि । सन्निधानें करूनि । जड लोहालागुनि । चेष्टा होय ॥७७०॥ कां दर्पणाचेनिवशें । सूर्यप्रकाश विशेषें । गृहांतरीं प्रवेशे । जया न्यायें ॥७१॥ तैसें प्रत्यगात्मसंनिधानत्वें । तें चैतन्य प्रतिबिंबत्वें । अहंकारांत असे सत्यत्वें । तया कारणें ॥७२॥ जडरूप अहंकार । तो बाह्य विषय जाण साचार । जाग्रत्स्वप्नांत करूनि संचार । सुषुप्तिआंत लीन होय ॥७३॥ तरी तत्प्रपंचासि । उपमा ते कैसी । ह्मणतिले तरी तयासि । परिहार अनुभवें ॥७४॥ अहंकार लया । अवस्थात्मक झालिया । सुषुप्ति आंतु अतिशया । अविद्या ह्मणविजे ॥७५॥ अंधकार गृहांत कोणी । बद्ध निद्राकपाट देऊनि । निष्कंप दीपरूप होऊनि । प्रकाशमान ॥७६॥ आपोआप अत्यंत असे प्रकाशत । तो प्रत्यगात्मा सततोदित । ज्योति ह्मणवी ॥७७॥ मग काळकर्मसमीरण । प्रेरणवशें करून । तामस ह्मणजे निद्राछादन । कपाट उघडुनि ॥७८॥ आणिक अविद्या प्रथम अवस्थात्मक । महत्तत्व ह्मणजे मध्यकारक । गृहद्वार उंबरवटिका । स्थानावरी येऊनि ॥७९॥ अहंकार सात्विक । ह्मणिजे मणिस्फटिक । प्रत्यगात्मा प्रदीपक । प्रतिबिंबासि ॥७८०॥ गर्भीकृत करूनि । प्रथम ऐसा जीव होऊनि । स्वप्नावस्था ह्मणिजे मध्यस्थानीं । गृहांत प्रवेशें ॥८१॥ वरि इंद्रि-

प्रकाशमानप्रत्यगात्मप्रदीपप्रतिविंवगर्भितः सन् । पूर्ववच्छिवो भूत्वा स्वप्नावस्थामयमध्यमागारं प्रदीपयन् सन्नुपरि प्रज्ञावलिक्षेमंकराध्यक्षाक्षगवाक्षैर्वहिर्निगत्य जाग्रदवस्थाकारकूटागारबाह्यांगणप्रदेशं प्रकाशयन् समवर्तत पुनः कालकर्मादिसमीरणप्रेरणेनैव निद्रालक्षणकवाटे सुस्थिरं बद्धे सति तदानीमेव सोहंकारस्फटिकमणौ स्वकारणीभूताविद्यायां लीने सति जाग्रत्स्वप्नवाह्यांगणमध्यमगृहद्वयमंधकारमयं जातम् । तदहंकारस्फटिकमणौ प्रतिफलितचिद्दीपप्रकाशः स्वस्य मूलभूतप्रत्यगात्मप्रदीपे एकीभूतो वर्तते । एवं जाग्रदाद्यवस्थात्रयमध्ये अहंताभावाभावौ ज्ञातवानविकार आत्मा एकः देहादिभ्यः प्रत्येकं वर्तत इत्यनेनाहंकारो नात्मेति सिद्धम् ।

## अहंकारसंवंधः

श्लोकः ॥ वहिर्विषयभूतानामात्मा प्रत्यक् चिदात्मनः ॥ वेद्य इत्यादिरूपेण जडाजडमयस्य च ॥ दर्पणस्याप्य * भागोऽयं मुखानभिमुखात्मनः ॥ तद्वत्प्रकाशात्मकाहंकारस्य देहचिच्छायप्रत्यगात्मभिः त्रि-

---

यें गवाक्ष रंध्राचेनि । बाहेर प्रकाश करूनि । जागृदवस्था ह्मणिजे बाह्यांगणीं । प्रकाशत असे ॥८२॥ आणि काळ कर्म समीरण । प्रेरणवशें करून । निद्रा ह्मणिजे आच्छादन । कपाट दिधलियावरी ॥८३॥ अहंकार ह्मणिजे स्फटिकमणी । तो तद्युक्त होऊनि । कारण अविद्या अंतर स्थानीं । लय पावलिया ॥८४॥ जागृत स्वप्न ह्मणिजे इतर । अंगणामध्यें घर । अंतरीं अंधकार । मय होय ॥८५॥ अहंकार मणि आंतु । होऊनि प्रतिफळितु । चेतन प्रकाशवंतु । तो आपणासि ॥८६॥ झाला मूळभूत । प्रत्यगात्माचि दीपांत । एकत्व तद्युक्त । होऊनि असे ॥ ८७ ॥ ऐसें जागृदादि सर्व । अवस्था त्र्याचे ठायीं उद्भव । अहंकार भावाभाव । तो सकळपरि ॥८८॥ जाणे अविकारी आत्मा एक । तो असे होऊनि पृथक् । त्यालागीं अहमात्मा साक्षिक । ह्मणे श्रुति प्रसिद्ध ॥८९॥

## अहंकारसंबन्ध.

ओव्याः—आणिक बाह्यविषयस्तोमा । प्रवर्ते होऊनि आत्मा । ते जाणे प्रत्यगात्मा । वेद्यत्वें ह्मणोनि ॥७९०॥ जडाजड स्वरूपकारक । दर्पणाचे पाठीं पोटि विशेख । तैसें प्रकाशाप्रकाशात्मक । असे तया ॥९१॥ अहंकारासि देहचिच्छाया ।

---

* टीपः—दर्पणाची मागची बाजू.

भिः सह संबंधोऽस्ति तेष्वहं ज्वरामीत्यनेन चित्प्रतिबिंबयुक्ताहंकार-संबंधः स्थूलदेहस्योष्णादिपरिज्ञातृत्वमेव कर्मजनितं भूत्वा कर्मज-मुच्यते अनंतरमहं जानामीत्यनेन चिच्छायाहंकारयोः संबंधः सृष्टि-मारभ्यामोक्षपर्यंतं विनाशरहिततया सहज इत्युच्यते अनंतरमहंक-र्तेत्यनेनासंगप्रत्यगात्माहंकारयोः संबंधः भ्रान्तिजन्य इत्युच्यते एव-मादिसमस्तं दृश्यविवेकरूपं भवति ।

### बिंबप्रतिबिंबभावः

अनंतरं निर्गुणाखंडचिन्मात्रब्रह्मरूपः परशिवो बिंबः मूलभूतमा-यैवादर्शः सगुणब्रह्मरूपेश्वरलिंगमेव प्रतिबिंबः पुनस्स परशिव एव बिंबोऽविद्यैवादर्शः । जीवलिंगं प्रतिबिंबः पुनरीश्वरलिंगमेव बिंबः गुणसाम्यरूपमायोपाधिरेव दर्पणं ब्रह्मांडप्रपंच एव प्रतिबिंबोऽनंतरं जीवलिंगमेव बिंबोऽन्तःकरणमेव दर्पणं सुखादिविषय एव प्रतिबिंब इत्येवं ज्ञातुं जीवसाक्षीश्वरसाक्षिणोरेव निरुपाधिकमूलप्रतिबिंबयो-स्सतोस्तयोरैक्योपपत्तिर्भवति ॥

---

प्रत्यगात्मा ह्मणिजे हि या । संयोगें अतिशया । संबन्ध असे तरि ॥ ९२॥ त्याचें ठायीं । अहंज्वरामि ह्मणवीत । असे तया निमित्त । चित्प्रतिबिंबयुक्त । अहंकारसंबंधें ॥ ९३॥ स्थूलदेहासि उष्णादिकरून । जाणणें अनुसंधान तें कर्मजनित होऊन । कर्मज ह्मणवी ॥ ९४॥ आणिक अहंजानामि । आपण ह्मणवी तयाकारण। चिच्छाया अहंकारालागून । संबंध तो ॥ ९५॥ सृष्टयादि करून। मोक्ष अवसान। पर्यंत ह्रासन । न होतां सहज ह्मणवी ॥ ९६॥ आणिक अहंकर्ता इति । ह्मणवी त्यालागीं असंगज्ञप्ति । प्रत्यगात्मा अहंकारसंबंधें भ्रांति । जन्य ह्मणवी ॥ ९७॥ इति सकळ दृश्यविवेक विवरण जाणावें *

---

* यानंतर निर्गुणाखंडचिद्रूप । ब्रह्मस्वरूप परशिव हेंच बिंबरूप । मूलभूत माया अमूप । दर्पणचि जाणा ॥ १॥ सगुण ब्रह्मस्वरूप । ऐसें ईश्वर लिंगचि प्रतिबिंबस्वरूप । आणिक तो परशिवाचि बिंबरूप । अविद्यादर्पण जाणा ॥ २॥ जीवलिंगचि प्रतिबिंबस्वरूप । मायेश्वर लिंगचि बिंबरूप । गुणसाम्य हेचि मायोपाधि अनूप । दर्पण जाणा ॥ ३॥ ब्रह्मांड प्रपंचचि प्रतिबिंबस्वरूप । नंतर जीवलिंग हेचि बिंबरूप । निर्मल अंतःकरण अमुप । दर्पण जाणा ॥ ४॥ सुखादि विषयाचि प्रतिबिंबस्वरूप । यापरि जाणता शिवसमीप । जीवसाक्षि ईश्वरसाक्षी हेचि निरूप । होईल निरुपाधिक मूलबिंबैक्य जाणा ॥ ५॥

## निराकारप्रतिविंबः

अनन्तरं निराकारंवस्तु सुस्फुटं कथं प्रतिविंबितं भवतीत्युक्तौ नीरूपं सदपि गगनं जले प्रतिविंबितमितिवत् इतरप्रतिबिंबन्यायेऽनियते सति तच्चित्प्रभावे विरुद्धं भवति ॥

## प्रतिबिंबस्य प्रतिविंबः

पुनस्तस्य विंबस्य प्रतिविंबत्वं यदि न्यायसम्मतं तथापीश्वरो जगदाकारस्सन् कथं प्रतिविंबितो भवतीत्युक्तौ दर्पणे प्रतिफलितस्सन् भित्तौ प्रतिफलितपतंगविंब इव भेदभानमात्रमिति कथमपि न भाति विरोधः॥

## विंबसाम्यभंगः

अनन्तरं निष्कलंकं चैतन्यं कथं सकलंकचिदाभासोऽभूदित्युक्तौ निष्कलंकतया रमणीयं मुखं अतिविरलपारदतया च्छिन्द्रवति मुकुरे प्रतिफलितं सत् यथा कलंकितं भवति तथोपाधिभूतमायाविद्यादीनां कलंकवत्वमेव चिदाभासादिकारणं भवतीत्युक्ते प्रतिबिंबभूतमखिलं विंबतुल्यमिति वादो निराकृतः

---

या ओव्या कानडी पुस्तकाच्या आधारें केल्या आहेत.

### निराकारप्रतिविंब.

ओव्याः—लोकन्याय विरुद्ध होऊनी। निराकार वस्तुचि प्रतिफळुनी। प्रतिविंब स्वरूप पावोनी। कैसें असतें ॥१॥ या प्रश्ना लागोनी। उत्तर देती दृष्टांत देउनी। तें ऐका लक्ष देऊनी। सूज्ञ सज्जनहो ॥२॥ गगन विरूप असलें तरी। जळांत प्रतिफळतें यापरी। जन बोलती परस्परीं। अनुभव सर्वां आहे ॥३॥

### प्रतिबिंबप्रतिविंब.

ओव्याः—आणिक तें विंवरूप। जरी होतें प्रतिबिंबस्वरूप। जरी प्रतिविंब असें ईश्वररूप। जगदाकार कसें होतें ॥१॥ प्रतिफळतीं दर्पणांत। तेंचि दिसे रत्नभित्तींत। यापरि सूर्यकिरणें व्यवहारांत। प्रसिद्धपणें प्रकाशती ॥२॥ हे प्रतिविंवपृथक्करण। भानमात्र जाणून। सिद्धांतीते सुजन। विरोध परिहरति।

### विंबसाम्यभंग.

ओव्याः—शिवरूपनिष्कल असुनि। कैसे भासे सकलंक होवोनि। ऐशा प्रश्ना लागोनि सदुत्तर ते ऐका ॥१॥ कलंकरहित तें वदन। दर्पणभेदें भिन्नभिन्न। प्रतिफळतें विकृत होवोन। अनुभवसिद्ध आहे पै ॥२॥ तैसे हे शिवमूर्त। होवोनि मायोपाधियुक्त। भिन्नभिन्न दिसे या जगांत। हेचि सकलंकत्व जाणा ॥३॥

## उपाधिसाम्यम्.

एवं चेत् प्रतिबिंबः कस्य समनियतो भवतीत्युक्तौ उपाधिभूतदर्पणाभावे तदभावः दर्पणसत्वे तत्सत्वं सति दूषिते दर्पणे प्रतिबिंबस्य दौष्ट्यं दर्पणे चलिते सति तस्य चलनं दर्पणे भग्ने सति स्वयमपि भग्नो भूत्वा बिंबभूतदर्पणेन सहैकीभवत्यत एव प्रतिबिंबो तदुपाधिसमनियतो भवति तस्मात् अंतःकरणरूपाविद्योपाधौ कामक्रोधादिमलयुक्ते सति जीवलिंगस्वरूपस्सकलंको भवति अंतःकरणे मैत्र्यादिपरिकल्पितत्वविशिष्टवैराग्यविवेकादिना परिशुध्दे सति जीवलिंगस्वरूपः शिवलिंगमिव निष्कलंको भवति अंतःकरणे नष्टे सति जीवत्वनाशात् शिवलिंगेन सहैकीभवतीति निश्चितम् ।

## उपधेयभिन्नत्वम्

पुनश्चैतन्यमेकमेव तत्सान्निध्यमात्रेण मायाद्युपाधयश्चेष्टन्त इत्युक्तौ चैतन्ये सर्वदिक्कालं व्याप्य स्थिते सति उपाधिकार्यं सार्वत्रिकं

---

या ओव्या कानडी पुस्तकाच्या आधारें केल्या आहेत.

### उपाधिसाम्य.

ओव्याः—ऐशा या प्रतिबिंबासि । कोण सम आहे त्यासि । ते सांगा आह्मांसि । प्रश्न करि कोणी एक ॥ १ ॥ उपाधिरूप दर्पणा व्हावी । प्रतिबिंब दिसे केवि । आणि दूषित दर्पण जरि सेवि । मुख दिसे दुष्ट ॥ २ ॥ चेष्टा केलि दर्पणासियां । मुख दिसे विकारमया । आणि भग्नदर्पणि पाहे मुखासि या । दिसे भग्न वदन ॥ ३ ॥ ऐसे भग्न होउनि वदन । बिंबांतऐक्य होवोन । उपाधि समनियत होवोन । तेंचि प्रतिबिंब दिसे ॥४॥ अंतःकरणरूप अविद्योपादि वसे । कामक्रोधादि मल सहवासें । जीवलिंग सकळंक दिसे । ऐसे बोलती ज्ञानी ॥५॥ मैत्र्यादियुक्तांतःकरण । वैराग्यविवेकादिकें करोन । तें जीवलिंग निर्मल होवोन । दिसे शिवलिंगापरि ॥ ६ ॥ अन्तःकरण नाशानंतर । जीवत्व जातें बहु दूर । होतें शिवलिंगाकार । निश्चित हें जाणा ॥ ७ ॥

### उपधेयभिन्नत्व.

ओव्याः—चैतन्य हे एक असुनि । तत्सान्निध्यमात्रें करूनि । मायाद्युपाध्याखिल

सार्वकालीनं सत् कथं नाविर्भवतीत्युक्ते एकस्मिन्नखंडाकाशे खंडभूतवीणावेणुमृदंगादिवाद्यानां परस्परभेदविशिष्टशब्दवैचित्र्यस्य सद्भावात् विकृतस्याकाशस्य वीणाकाशः वेण्वाकाशः मृदंगाकाश इति यथा भेदः कल्प्यते तथा तत्तदंतःकरणादिशरीरोपाधिभिस्तत्तज्जीवादिचैतन्यभिन्नत्वं बंधमोक्षभेदश्च व्यवहारसिद्ध इत्युक्तं भवति ।

## अनादिषट्कम्

अनन्तरं शुद्धचिद्रूपपरशिवः जगध्देतुभूतपरमेश्वरः संसारी जीवः संसारस्य मूलभूतमज्ञानं जीवेश्वरभेदः चिज्जडभेद इति षडनादिसिद्धास्तेषु असति कारणे एभिस्सह प्रपंचं परमेश्वरः कथं जनयामासेत्युक्ते न केवलं पूर्वोक्तानादिषट्कस्योत्पत्तिः परमेश्वरात् किंतु शशशृंगादिवदतुच्छभूतस्य जीवकल्पितशुक्तिरजतवदनिर्वचनीयव्योमादिप्रपंचस्योत्पत्तिरभूदतः परमेश्वरकल्पितत्वमबाधितं भवति ।

---

जनीं । चेष्टा करिती निशंक ॥१॥ चैतन्य दिसें सार्वकालिक । आणिक दिक्कालव्यापक । ऐसें असतां उपाधि कार्यक । सार्वकालिक कां न दिसे ॥२॥ या प्रश्नासि उत्तर । देतीं महांत सूज्ञवर । मनकरोनिया स्थिर । ऐका सज्जन हो ॥३॥ अखंड असुनि परमाकाश । वेणुवीणाभेदें खंडाकाश । भिन्नभिन्न दिसे सावकाश । अनुभव सर्वां लोकां ॥४॥ या भेदकल्पनेसमान । तत्तदंतःकरणादि शरीरादिकें करोन । चैतन्य दिसे भिन्नभिन्न । बन्धमोक्ष व्यवहारासि ॥५॥

### अनादिषट्क.

ओव्याः—यानंतर शुद्धचैतन्य पराशिव । जगत्कारण परशिव । आणिक संसारी जीव । संसारमूल अज्ञान ॥१॥ जीवेश्वर चिज्जडभेदें करून । अनादिसिद्ध हे षड्भेद जाणोन । यांसि कारण नसोन । यांहीं युक्त ते ॥२॥ प्राणियुक्त प्रपंच सर्व । उत्पन्न करितो कैसा पराशिव । ऐसा प्रश्न करि एक जीव । यासि उत्तर सांगे ॥३॥ पूर्वोक्त अनादि षट्कावांचोन । शशशृंगापरि तुच्छ नसोन । जीवकल्पित जगद्भासन । शुक्तिरजतापरि अनिर्वचनीय ॥४॥

( या ओव्या कानडी पुस्तकाच्या आधारें केल्या आहेत. )

## सप्तावस्थाः

अनंतरं अज्ञानावरणविक्षेपपरोक्षज्ञानापरोक्षज्ञानशोकनिवृत्तिनिरंकुशतृप्तय एव जीवस्य सप्तावस्थास्तासु संसारासक्तचिदाभासभूतजीवः श्रुत्यर्थविचारात्पूर्वमेव स्वस्य निजस्वरूपं स्वयंप्रकाशं प्रत्यगात्मानं न जानामीत्येतदज्ञानं अनंतरमेकस्मिन्काले चिदात्मप्रसंगे सति प्रत्यगात्मा नास्ति प्रत्यगात्मा न भासत इत्युभयविधप्रमोह एव तदज्ञानकार्यमावरणमित्युच्यते स्वयं कर्मकर्ता स्वयंकर्मभोक्तेति मत्वा देहाभिमानी चिदाभासजीवः स्वयमेव विक्षेप इत्युच्यते । अनंतरमात्मनोऽस्तित्वप्रतिपादकश्रुत्याचार्यवाक्यविश्वासेन प्रत्यगात्मास्तीति प्रत्यायनमेव प्रथममसत्त्वावर्णनिवर्तकीभूतापरोक्षज्ञानमुच्यते त्वमेव ब्रह्मेति प्रतिपादकीभूतवेदवाक्यविचारपरिपाकवशेन प्रत्यगात्मैवाहमिति परिज्ञानमेव द्वितीयभावनावर्णनिवर्तकीभूतापरोक्षज्ञानमुच्यते । अनंतरं प्रत्यगात्मसाक्षात्करणोपर्यहं कर्मकर्ता।अहं फलभोक्तेति जीवत्वरूपदुःख-

---

## सप्तावस्था.

ओव्याः— यानंतर अज्ञानावरण । विक्षेप परोक्षज्ञान । अपरोक्षज्ञान । ह्मणोनिया ॥९८॥ शोकनिवृत्ति । निरांकुशतृप्ति । ह्मणिजे इति । जीव सप्तअवस्था ॥९९॥ त्याचें ठायीं । संसारासक्त होऊन । चिदाभास जीव आपण । श्रुतिविचार संभाषण । पाहुनि प्रथम ॥८००॥ आपुलें निजस्वरूप । स्वयंप्रकाशरूप । नेणोनि असे प्रत्यगात्माप्रदीप । तें अज्ञान ह्मणवी ॥१॥ आणिक कवणे एकेकाळीं आपैसे । चिदात्माप्रसंगवशें । प्रत्यगात्मा नाहीं असे । प्रत्यगात्मा न भास असे ॥२॥ या उभयालागुन । अंतर अज्ञान । कार्यआवरण । तें आवरण ह्मणवी ॥३॥ आणिक मी कर्मकर्तृ । मी कर्मफळभोक्तृ । ह्मणोनिया नेतृ । आरोपण ॥४॥ देहअभिमान । वशेंकरून । चिदाभास जीव आपण । विक्षेप ह्मणवी ॥५॥ आणिक आत्म ( अस्त्यत्व ) बोले सौरसें । श्रुत्याचार्य वाक्यविश्वासें । प्रत्यगात्मा असे । ह्मणोनि जाणणें ॥६॥ ते असत्यआवरण । निर्वर्तक आपण । परोक्षज्ञान । ह्मणवी निरुतें ॥७॥ आणिक तूंचि परब्रह्म एक । ह्मणोनि सांगे वेदवाक्य । तें विचारें परिपाक । निज गुरुमुखें ॥८॥ प्रत्यगात्मा आपण ह्मणोन । जाणणें तें अभाव आवरण । द्वितीयें निरसन । अपरोक्षज्ञान ह्मणवी ॥९॥ आणिक आत्मसाक्षात्कार । जालियावरी मी कर्मकर्तृ । मी कर्मफलभोक्तृ । ह्मणिजे इति ॥८१०॥ जीवरूपदुःख कारक संबंधपक्ष । परित्याग ते शोक । निवृत्ति ह्मणवी

रूपपरित्याग एव शोकनिवृत्तिरुच्यते । अनंतरं कर्तव्योऽर्थः सर्वोऽपि कृतः प्राप्तव्यफलजातं सर्वं प्राप्तमिति सहजपरितुष्टिं प्राप्य वर्तनमेव निरंकुशतृप्तिरुच्यते एतच्छोकनिवृत्तिनिरंकुशतृप्ती द्वे एवावस्थे अपरोक्षज्ञानफले भवतः ।

## सप्तावस्थासमन्वयः

अनंतरं स्वयंप्रकाशस्य चिद्रूपस्यात्मनः नित्यापरोक्षत्ववत्त्वेन तस्मिन्परमात्मन्यज्ञानादिसप्तावस्थाघटना न संभवतीत्यत्र दृष्टान्तः क इत्युक्ते पूर्वं दश पुरुषाः एका नदीं तीर्त्वा गमनानंतरं स्वीयपरामर्शप्राप्तिसमये तेषु नवसंख्याकपुरुषान् अभिलक्षीकृत्य गणयन् पुरुषः स्वयं दशमः पुरुष इत्यजानन् सन् यो वर्तते तदेवाज्ञानमित्युच्यते दशमो नास्ति न प्रकाशत इत्यज्ञानकार्यमेवावरणं अनंतरं दशमः पुरुषो नद्यां मृतोऽभूदिति दुःखमेव विक्षेप उच्यते । अनंतरं पृथगेकस्याप्तस्य वचनेन दशमः पुरुषोऽस्तीति परिज्ञानं दशमो नास्तीति प्रथमावरणस्य विरोधिपरोक्षज्ञानमुच्यते । अनंतरं दशमस्य मृतिदुःखपरि-

---

॥११॥ आणिक करावया योग्य कृत्य । तें करूनि निवडलें विहीत । पावावयासि योग्यफळ अत्यंत । तें पावोनि निवडलें ॥१२॥ ह्मणोनि सहज उल्हास । परितुष्टि विशेष । पावणें तें निरंकुश । तृप्ति ह्मणवी ॥१३॥ एवं शोकनिवृत्ति निरंकुश तृप्ति । ह्मणिजे उभयअवस्थाप्रति । अपरोक्ष ज्ञानफळ ह्मणविती । प्रसिद्ध जाणावें १४॥

## सप्तावस्थासमन्वय.

ओव्याः—आणिक स्वयंप्रकाश । चिद्रूपआत्मा अशेष । नित्यपरोक्षत्व तयास । असे तरी ॥१५॥ तयासि अज्ञानादिकरून । सप्तअवस्था अघटमान । ह्मणोनि तयाकारणें । दृष्टांत तो कैसा ॥१६॥ कश्चित दशमपुरुष पूर्वी । उतरोनिया जान्हवी । वरी आपणासि स्वभावीं । विचारूं ठेले ॥१७॥ ते समयीं क्रमें करूनि । नवसंख्या पुरुष मिळवूनि । आपणासि विसरे निदानीं । तें अज्ञान ह्मणवी ॥ १८ ॥ आणि दशम नर झाला काय । नाहीं न दिसे हे उभय । भ्रांतिते अज्ञानकार्य । आवरण ह्मणवी ॥१९॥ दशम पुरुष नदी आंत । पावला जलमृत्यु । ह्मणोनि दुःखाक्रांत । तो विक्षेप ह्मणवी ॥८२०॥ आणिक एक आप्तवाक्यें धैर्य । दशम पुरुष आहे । ह्मणोनि निश्चयें । तें अपरोक्षज्ञान ह्मणवी ॥२१॥ वरि नव संख्या क्रमेंनर । मेळवूनि दशम पुरुषवर । तूंचि ह्मणोनि साक्षात्कार । तें अपरोक्षज्ञान ह्मणवी ॥२२॥ आणिक दशम पुरुष । तयाचें मृत्युदुःख । निरसन ते शोक । नि-

त्याग एव शोकनिवृत्तिरुच्यते । अनंतरं निजस्थित्या सुखेन सद्भाव एव निरंकुशतृप्तिर्भवति ।

## वेदवाक्यविचारः

अनंतरं वेदवाक्यविचारः कथमित्युक्ते विधिवाक्यं निषेधवाक्यं सिद्धार्थबोधकवाक्यमिति वेदवाक्यं त्रिविधतया वर्तते तेषु यज्ञादिकं कुर्यादित्यजादिपदसमभिव्याहृतवाक्यं विधिवाक्यं तत्र भट्टपादमते यजिसमभिव्याहृताजः किंचिन्नामकयागकरणकाभावनेति विधिवाक्यस्यार्थः गुरूणां मते तु यागविषयकं कार्यमिति कार्यत्वविशिष्टमपूर्वं। यजिसमभिव्याहृताजार्थ इति नैय्यायिकानां मते यागेष्टसाधनमिति यागगतेष्टसाधनत्वकृतिसाध्यत्वं बलवदनिष्टाननुबंधित्वमिति त्रितयं यजिसमभिव्याहृताजार्थः वैयाकरणमते इष्टसाधनीभूततत्कर्माधिकारिकर्तृकधात्वर्थीभूतयज्यादिलक्षणभावना अजूसमभिव्याहृतयज्यादिधातोरर्थः । एतादृशार्थकवाक्यं विधिवाक्यं भवति सुरापानं न कुर्यादिति कलंजभक्षणं न कुर्यादिति ब्राह्मणं न हन्यादिति नञ् समभिव्याहृतविधिवाक्यं निषेधवाक्यमुच्यते । अजादिविधिशून्यं सिद्ध्यैकवाक्यतापन्नभिन्नं सद्ब्रह्मात्मैक्यप्रतिपादकं वाक्यजातं सिद्धार्थबोधकवाक्यमुच्यते ।

## वेदांतमहावाक्यार्थः

अनंतरं ऋग्यजुःसामाथर्वणात्मकचतुर्वेदेषु क्रमेण प्रतिपादितानि

---

वृत्ति ह्मणवी ॥२३॥ वरि स्वबोधस्थिति । सुखेंअसणें आत्मरति । ते निरंकुशतृप्ति। ह्मणोनि जाणिजे ॥२४॥

## वेदवाक्यविचार.

ओव्याः—आणिक वेदवाक्यें विचारविशेख । असे पृथक । होऊनिया ॥२५॥ विधिवाक्यें निषेधवाक्यें । सिद्धार्थबोधकवाक्यें । ह्मणोनि वेदवाक्यें। त्रय त्याचे ठायीं ॥२६॥ यज्ञादि सत्कर्म करणें मुख्य । तें ह्मणवी विधिवाक्य । सुरापानादि करूं नये इत्यादिक । तें निषेधवाक्य ॥२७॥ विधिनिषेध परि त्यागत्व । ब्रह्मात्मैकरूपत्व । वस्तुमात्र बोधकत्व । ते सिद्धार्थ बोधकवाक्य ॥२८॥

## वेदांतमहावाक्यार्थ.

ओव्याः—आणिक ऋग् यजु साम । अथर्वण ह्मणिजे चतुर्निगम । त्याचे ठायीं

प्रज्ञानं ब्रह्म अहं, ब्रह्मास्मि, तत्त्वमसि, अयमात्मा ब्रह्मेति, सिद्धार्थबोधकानि चत्वारि महावाक्यानि तन्मध्ये मुख्यभूततत्त्वमसीति वाक्यस्य तत् त्वं असीति पदत्रयम् । तत्पदं त्वं पदं प्रातिपदिकं च क्रियापदम्॥ असिधातुपदं चेति पदत्रयमिदं भवेत् । अस्मिन्नभियुक्तवाक्ये तेषां शिवो जीवः तदुभयैक्यं चेत्यर्थत्रयं ननु तत्त्वमिति पदद्वयसमभिव्याहारादेवैक्यलाभे असीति पदं व्यर्थं तत्त्वं पदयोः समानविभक्तिकत्वेन सामानाधिकरण्यलाभात् । सामानाधिकरण्यं च भिन्नप्रवृत्तिनिमित्तयोः पदयोरेकस्मिन्नर्थे पर्यवसानं तदुक्तं शिरोमणिकृता भिन्नाभ्यां धर्माभ्यां एकधर्म्युपस्थापकत्वं शब्दानां सामानाधिकरण्यं तथा चासि पदं विना ऐक्यलाभे असि पदं व्यर्थमिति चेन्न। असि पदं समभिव्याहारलाभैक्यानुवादकं पुरोवादस्तु समभिव्याहार एव ॥ श्लोक ॥ पांचरात्रस्थिताः सर्वे तच्छब्दस्यार्थनिर्णयं ॥ कुर्वन्ति तत्पदस्यार्थस्त द्दासस्तदधीनकः ॥ सामानाधिकरण्यं च तद्दासस्त्वमसीत्यतः । लक्षणा दोषसंप्राप्तिर्भवतामपि सा समा । पदद्वये लक्षणा ते एकस्मिन्नेव लक्षणेति चेत् ॥ तत्पदार्थत्वंपदार्थयोर्भेदांगीकारे आनंत्यलक्षणगौरवप्रसंगात् तत्त्वशास्त्रप्रतिपाद्यार्थदौर्लभ्यापत्तेः तत्कथमित्युक्ते पूर्वमेव तन्निरूपितं उपाधिभेदेनैकेनैवात्मना सर्वव्यवहारोपपत्तौ अनंतात्मकल्पनागौरवप्रसंगात्

## वाक्यार्थसंबंधत्रयम्

अनंतरं पदपदार्थवाक्यार्थानां सामानाधिकरण्यसंबंधविशेषणविशेष्यसंबंधलक्ष्यलक्षणसंबंधा एव क्रमेण संबंधत्रयं भवति ।

---

अनुक्रम । प्रतिपाद्य योग्य ॥२९॥ प्रज्ञानं ब्रह्म अहं ब्रह्मास्मि तत्त्वमसि । अयमात्मा ब्रह्म ह्मणोनि ऐसि । सिध्यर्थ बोध विशेषि । चतुर्विध महावाक्य ॥ ८३० ॥ तयांमध्यें जाले मुख्य । तत्त्वमसि ह्मणिजे महावाक्य । तयासि पृथक् । तत् त्वं असि ॥३१॥ ह्मणिजे पदत्रय । जीवा शिव उभयैक्यमय । ह्मणोनि परिक्रमें अर्थत्रय । असें निरुता ॥३२॥

## वाक्यार्थसंबंधत्रय.

ओव्याः—आणिक पदपदार्थ । तथा वाक्यार्थ । तयासि यथायुक्त । सामानाधिकरण्य संबंध ॥३३॥ विशेषण विशेष्य संबंध । लक्ष्यलक्षणसंबंध । ह्मणिजे अनुक्रमसंबंध । त्रयप्रकार ॥३४॥

## तत्त्वंपदवाच्यार्थः

अनंतरं तत्त्वंपदार्थानां वाच्यार्थौ लक्ष्यार्थ इति अर्थद्वयं तयोः पूर्वोक्तस्थूलादितनुत्रयसमष्टिरूपान् विराट्पुरुषहिरण्यगर्भेश्वरान् ब्रह्मचैकीकृत्य तप्तायःपिंडवत् एकतया निरीक्षणे तत्पदस्य वाच्यार्थ इति मुख्यार्थ इति अभिधार्थ इत्युच्यते अनंतरं तनुत्रयव्यष्टिरूपान् विश्वतैजसप्राज्ञान् प्रत्यगात्मानं मिलित्वा तप्तायःपिंडवदेकतया निरीक्षणे त्वंपदस्य वाच्यार्थः मुख्यार्थः अभिधार्थ इत्युच्यते ।

## तत्त्वंपदलक्ष्यार्थः

अनंतरं विराट्पुरुषादीन् विवेचयन्निरुपाधिकब्रह्मैव तत्पदस्य लक्ष्यार्थः शोधिततत्पदार्थ इत्युच्यते अनंतरं विश्वादीन् विवेचयन्निरुपाधिकप्रत्यगात्मैव त्वंपदस्य लक्ष्यार्थः शोधितत्वंपदार्थ इत्युच्यते ।

## लक्षणा

तत्र लक्षणानाम शक्यसंबंधः यथा गंगायां घोष इत्यत्र गंगाशब्दस्य प्रवाहे शक्तिः शक्त्या गंगापदप्रतिपाद्यः गंगापदशक्यः प्रवाहः तत्संबंधस्तीरादौ वर्तते सैव लक्षणा । ननु गंगासंबंधि तीरादिकं गंगापदशक्यं भवितुमर्हति गंगापदस्मारितत्वाद्गंगापदसमभिव्याहृतवा-

---

### तत्त्वंपदवाच्यार्थ.

ओव्याः–आणिक त्यापदत्रयासि विहित । वाच्यार्थ लक्ष्यार्थ । ह्मणोनि पदार्थद्वय त्याचे ठायीं ॥३५॥ पूर्वोक्त स्थूलादितनुत्रय । समष्टिरूप अतिशय । विराटरूप हिरण्मय । गर्भ अव्याकृत ॥३६॥ ईश्वर ब्रह्म संयुक्तसरिसे । तप्तायपिंडा ऐसें । एकाकार दिसे । होऊनिया ॥३७॥ तें तत्पदासि वाच्यार्थ । आणि मुख्यार्थ । ह्मणोनि अभिधानार्थ । ह्मणवीत असे ॥३८॥ आणिक स्थूलादि सर्व । देहत्रय अवयव । व्यष्टिरूपविश्व । तैजसुप्राज्ञ ॥३९॥ प्रत्यगात्मा संयुक्तसरिसे । तप्ताय पिंडाऐसें । एकाकार दिसे । होऊनिया ॥४०॥ ते त्वंपदासि वाच्यार्थ । आणि मुख्यार्थ । ह्मणोनि अभिधानार्थ । ह्मणवीतसे ॥४१॥

### तत्त्वंपदलक्ष्यार्थ.

ओव्याः–आणिक विराट्पुरुषादि । निरसुनि उपाधि । उरे निष्फळ उपलब्धी । निरुपाधि ब्रह्म ॥४२॥ ते तत्पदालागुनी । लक्षितार्थनिदानीं । शोधितार्थ ह्मणउनि । शुद्ध तत्पदार्थ ह्मणवी ॥४३॥ आणिक विश्वादि करूनि पृथक् । उरे प्रत्यगात्मा निरुपाधिक । ते त्वंपदासि लक्ष्यार्थ शोधक । शोधित त्वंपदार्थ ह्मणवी ॥४४॥

न्वयबोध्यान्वयप्रतियोगित्वात्प्रवाहवत् यद्वा गंगापदं तीरे शक्तं घोषान्वयप्रतियोगिस्मारकत्वात्तीरपदवदिति चेन्न यदि गंगापदं तीरशक्तं स्यात्तीरपदवदन्वयानुपपत्तिप्रतिसंधानं विना तीरे प्रयोक्तुं योग्यं स्यात् तीरनीरादौ समानप्रयोगश्च स्यात् तात्पर्यानुपपत्तिप्रतिसंधानमपि न स्यात्तस्माद्गंगापदं तीरे न शक्तं शक्तिवृत्तिं विनापि प्रवाहलक्षणशक्तिसंबंधेनैव तीरप्रतीत्युपपत्तेः अन्यलभ्यत्वादनन्यलभ्यो हि शब्दार्थः संभवत्येकार्थे नानार्थत्वाकल्पनादिति ।

## लक्षणाभेदः

अनंतरं सा लक्षणैव जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणेति त्रिविधा भवति गंगायां घोषः प्रतिवसति कुंताः प्रविशन्ति सोऽयं देवदत्त इति क्रमेणोदाहरणत्रयम् ।

## जहल्लक्षणा

तेषु गंगाशब्द एव प्रवाहरूपं स्वं मुख्यार्थं घोषरूपाभीरपन्याश्रयतानुपपत्त्या परित्यज्य तीरं लक्षयन् वर्तते

## अजहल्लक्षणा

अनंतरं कुंतशब्द एव स्वमुख्यार्थमत्यजन् कुंतधारिणः पुरुषान् लक्षयन्वर्तते ।

---

### लक्षणाभेद.

ओव्याः—आणिक जहल्लक्षण । अजहल्लक्षण । जहदजहल्लक्षण । ह्मणोनि लक्षणत्रय ॥४५॥ त्याचे ठायीं । गंगायां घोषः प्रतिवसति । कुंताः प्रविशन्ति । सोऽयं देवदत्त इति । ह्मणोनि क्रमें उदाहरण त्रय ॥४६॥

### जहल्लक्षणा.

ओव्याः—त्याचे ठायीं । गंगायां घोष शब्द तें । प्रवाहरूप जळ वर्ते । आपुलि मुख्यार्थ स्वानुमतें । शोधक ह्मणिजे ॥४७॥ गंगाजळाभीतरीं । नाहीं सर्वथा नगरी । असे गंगेचे तीरीं । हें जहल्लक्षण ॥४८॥

( या ओव्या कानडी पुस्तकाच्या आधारें केल्या आहेत. )

### अजहल्लक्षण.

ओव्याः—कुंताः प्रविशंति या वाक्यांत । अचेतनतें कुंतायुध प्रवेश करण्यांत । चेतन संबन्ध नसतां असमर्थ । अनुभवसिद्ध ॥१॥ कुंतशब्दवाच्यार्थ । कुंतायुध तेणें सहित । मानव प्रवेश करिती हें सत्य । अजहल्लक्षण जाणा ॥४९॥

## जहदजहल्लक्षणा

स इति शब्दो भूतकालदेशवयोविशिष्टदेवदत्तं प्रतिपादयति अयमिति शब्दः वर्तमानकालदेशवयोविशिष्टं प्रतिपादयति परंतूभयविरुद्धधर्मविशिष्टपदार्थयोरैक्यं न घटत इति उभयपदार्थगतकालभेदेन विरुद्धधर्मांशं परित्यज्याविरुद्धधर्मांशं देवदत्तमात्रं स्वीकृत्य स एवायमयमेव स इति तादात्म्यं घटते इयमेव जहदजहल्लक्षणेति भागत्यागलक्षणेति पर्यायनामवत्सद्वर्तमानध्वंसप्रतियोग्यर्जुनादिभूतः वर्तमानप्रागभावप्रतियोगिकल्क्यादिर्भविष्यत्पदार्थः स्वासमानकालीनभावनाधिकरणकालवृत्यन्यतरः पदार्थो वर्तमानः विरुद्धपदार्थतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकभेदद्वयाभाववानन्यतर इत्युच्यते।

## तत्त्वमस्यर्थः

तत्त्वमसीति वाक्ये उदाहरणतया सोऽयमितीदमेव वाक्यं वक्तुं योग्यं तत्कथमित्युक्ते तदितिपदं वाच्यार्थीभूतसर्वज्ञत्वादिसद्गुणविशिष्टः परोक्षीभूतशिवं प्रतिपादयति। ननु ब्रह्मविष्णुशिवा ब्रह्मन्प्रधाना ब्रह्मशक्तय इति विष्णुपुराणे त्रिमूर्तीनां ब्रह्मशक्तित्वप्रतिपादकश्रुत्या च शिवस्य ब्रह्मापरत्वेन तत्पदार्थत्वं कथमिति चेत् शिव इति पदेन पर-

---

## जहदजहल्लक्षण.

ओव्याः—आणिक तच्छब्द तें भूत। काळदेशवयोवशिष्टत्व। सांगे सत्यार्थ। देवदत्तासि ॥८५०॥ इदं शब्दार्थ ते वर्तमान। काळदेशवयोवशिष्टत्वपण। पावला देवदत्त ह्मणोन। सांगत असे ॥५१॥ इति हे उभयतां। विरोधधर्मयुक्तपदार्थ। ऐक्य सर्वथा। घडे तरी ॥५२॥ तो उभयपदार्थगतविरोध। धर्म त्यजुनि अविरोध। धर्मसमानदेवदत्त शुद्ध। मात्रा स्वीकारूनि ॥५३॥ मग तोचि हा हाचि तो ह्मणोन। ऐसें तादात्म्य उभयां लागून। घडे हें जहदजहल्लक्षण। ह्मणोनि नाम ॥५४॥ अर्थलक्षण। भागत्यागलक्षण। ह्मणोनि परिभिन्न। नाम होऊनि असे ॥५५॥ तत्त्वमासि ह्मणिजे महावाक्यातें। उदाहरण निरुतें। सांगावयातें। योग्य तें कैसें ॥ ५६ ॥

## तत्त्वमस्यर्थ.

ओव्याः—तत्पद वाच्यार्थ सर्व। ज्ञानादि षड्गुणविशिष्टभाव। परोक्षत्व शिव। स्वरूपसांगे ॥५७॥ त्वंपदवाच्यार्थ किंचिज्ञत्व। आदि हीन गुणविशिष्टत्व। परोक्ष चिदाभास जीवत्व। स्वरूप सांगे ॥५८॥ इति हें उभयत्व। असे विरोध ध-

प्रशिवो बोध्यते । अथर्वशिखोपबृंहणशिवपुराणवचनेन परमशिवस्य परब्रह्मत्वमवगम्यते । तथाहि ॥ श्लोकः ॥ यस्मात्सर्वमिदं ब्रह्मविष्णुरुद्रेंद्रपूर्वकम् ॥ सह भूतेंद्रियैः सर्वैः प्रथमं संप्रसूयते ॥ कारणानां तु यो ध्याता धाता परमकारणम् ॥ न संप्रसूयतेऽन्यस्मात्कुतश्च न कदाचन ॥ सर्वैश्वर्यादिसंपन्नो नाम्ना सर्वेश्वरः स्वयं ॥ सर्वैर्मुमुक्षुभिर्ध्येयः शंभुराकाशमध्यगः ॥ इति परशिवस्योभयथा तत्पदार्थत्वं घटते त्वमिति पदं वाच्यार्थीभूतकिंचिद्ज्ञत्वादिहीनगुणविशिष्टं अपरोक्षीभूतचिदाभासजीवं प्रतिपादयति इदं तूभयविरुद्धधर्मवत्पदार्थयोरेकत्वं न घटत इति अनंतरमुभयपदार्थगतपरोक्षत्वादिविरुद्धधर्मांशं परित्यज्याविरुद्धौ चैतन्यमात्रस्वरूपौ लक्ष्यार्थौ ब्रह्मकूटस्थौ स्वीकृत्य तदेवेदमिदमेव तदित्येवं तादात्म्यघटितं भवति असीति पदं तदुभयलक्ष्यार्थयोः परोक्षत्वापरोक्षत्वादीन्यविद्याकल्पितानीति बोधयन्सफलं भवति । एवं जाते सत्यात्मनः अखंडैकरसबोधमात्रमेव सिद्धमिति वाक्यार्थस्वरूपं भवति

## तत्त्वमसिदृष्टांतः

अनंतरं तत्त्वमसीति महावाक्ये प्रत्यगात्मपरमात्मनोः एकत्वं कथमित्युक्ते घटाद्युपाधिं नेति कृत्वा आकाश एक एवेतिवत् रामचं-

---

मेत्व । पदार्थासि एकत्व । कैसे घडे ह्मणतिलें तरी ॥५९॥ उभय पदार्थ गत । परोक्षत्व अपरोक्षत्व सहित । विरोधधर्म समस्त । संमत समजुनी ॥८६०॥ अविरोधधर्म । चैतन्यमात्रसम । लक्ष्यार्थब्रह्म । कूटस्थ स्वीकारून ॥६१॥ तोचि हा आपण । हाचि तो ह्मणोन । तादात्म्य निश्चयानें । घडे सत्यें ॥६२॥ आणिक असिपद । ह्मणिजे उभय अविशेष । लक्ष्यार्थशुद्ध । त्याचे ठायीं ॥६३॥ परोक्षत्व अपरोक्षत्वादि । अविद्या कल्पित उपाधि । ह्मणोनि बोधसिद्धि । सफळ होय ॥६४॥ आत्मा अखंडैकरस । बोधमात्र सिद्धप्रकाश । ह्मणोनि सौरस । वाक्यार्थ समाप्त ॥ ६५ ॥

## तत्त्वमसिदृष्टांत.

ओव्याः—आणिक त्या तत्त्वमसि । ह्मणिजे महावाक्यार्थासि । प्रत्यगात्मा परमात्मा उभयासि । ऐक्य झालें तरी ॥६६॥ तें ऐक्यत्व निश्चयें सत्य । ह्मणोनि यथार्थ । तयाकारणें दृष्टांत । कवण ह्मणतिलें तरी ॥६७॥ घटादि उपाधि नेति । मुखे निरसुनी अद्वैति । एकोगगन अंतीं । तेणें न्यायें ॥६८॥ रघुनाथासि उपचारें ।

द्रस्य परित्यज्य मनुजत्वं त्वमेव विष्णुरितिवत् कर्णस्य व्याधभावं निवार्य त्वमेव कुंतीपुत्र इतिवत् दशमपुरुषस्य मरणदुःखं परिहृत्य त्वमेव दशम इतिवत् स्वभावसिद्धमंतरा

## वाक्यार्थप्रतिपत्तिनिराकरणम्

अनंतरमेकपुष्पस्य स्वर्ग इति वाक्यवत् मोक्षे अपेक्षोत्पादकोऽर्थवाद इति प्रतिमा देवताकृतिरिति वाक्यवत् उपासनावाक्यमिति मनुजः देवेंद्र इति वाक्यवत् स्तुतिपरमिति परिचारकं प्रति राजेति वाक्यवदौपचारिकमिति अग्निर्माणवक इति वाक्यवत् गुणसादृश्यमिति अयं धेनोर्देह इति वाक्यवत् जातिव्यक्तिपरमिति घटे मृत्तिका नान्य इति वाक्यवत् कार्यकारणपरमिति नीलोत्पलमिति वाक्यवत् गुणगुणिपरमिति क्षीरदध्नोर्भेद इति वाक्यवत् विकार इति वारिकणयोरेकमिति वाक्यवत् अंशांशिकमिति बिंबप्रतिबिंबयोरैक्यवत् बिंबप्रतिबिंबभाव इति बहुविधेनैवं भेदपरतया विकल्प्य वक्तव्यतायाः

सत्यमद्वैतं, अद्वैतं परमार्थतः, नानापश्यन् मृत्युं गच्छति, यो वै स्वेतरं मनुते न स वेद, तदेकं, नैव नानास्ति, नात्र काचन भिदा·

---

तूं मनुष्य नव्हेसि साचारें । विष्णु अवतार साक्षात्कारें । ह्मणोनि तैसे ॥६९॥ कर्णासि व्याधभाव अभिमत । निरसुनी साक्षादर्थ । तूं कुंतीपुत्र सत्य । ह्मणोनि सत्य ॥८७०॥ दशम पुरुषाचें मरण । दुःखभाव निरसून । तूंचि दशम पुरुष आपण । तैसें सत्य स्वभावसिद्ध ॥७१॥

## वाक्यार्थप्रतिपत्तिनिराकरण.

ओव्याः–नातरि एक पुष्प तुज लागुनी । स्वर्ग होईल ह्मणोनि । मोक्षापेक्षा उपजवी मनीं । अर्थवादा ऐसें ॥७२॥ प्रतिमादिक मूर्तिमंत । करूनि देवताकृत्य । अति श्रद्धायुक्त । उपासनापरा ऐसे ॥७३॥ मनुष्यासि अति। देवेंद्रा इति। उपमा स्तुति । परा ऐसें ॥७४॥ सेवकालागुनि । राजेंद्र ह्मणोनि । उपचारवाणी। वाक्य ऐसें ॥७५॥ अग्नि माणवक । समानवाक्य। गुणविशेषक। सदृश ऐसें ॥७६॥ गोदेहवाक्यापरी जातिव्यक्तिपर । वाक्य हें सर्वथा साचार । क्षीरदध्याकार विकार । परि नव्हे ॥७७॥ इति दृष्टान्त अशेष । सांगितले निरर्थक । पूर्वोक्तसमानमुख्य । सार्थक नव्हती ॥७८॥ आणिक एक । दृष्टान्त सार्थक । वारिकणा ऐसें ऐक्य । सिद्धवाक्यन्यायें ॥७९॥ अंशांशिकां ऐक्य । बिंबप्रतिबिंब एक । उभयांसि ऐक्य । स्वभावसिद्ध तैसें ॥८८०॥ आणिक बिंबप्रतिबिंबवाद । ह्मणोनि बहु·

ऽस्ति, एको ह वै, एको रुद्रः, एकमेवाद्वितीयम्, एकत्वमनुपश्यति, शिवमद्वैतं चतुर्थम्, पूर्णमदः पूर्णमिदम्, इत्यादिश्रुतिविरोधो भवति॥

## तत्त्वार्थः

अनंतरं श्रुत्याऽचार्यनिजानुभवयुक्तिसम्मततत्पदार्थभूतशिवलिंगमेव त्वंपदार्थभूतजीवलिंगमिति तत्त्वार्थो निश्चितः

## मिथ्यात्वाविरोधः

अनन्तरमेवं विशेषणांशीभूताद्वैतस्य मिथ्यात्वमुक्त्वा सत्यस्य विशेषचिन्मात्रस्यैक्ये उक्ते सति अद्वैतासिद्धिर्भवतीत्युक्ते मिथ्यात्वस्यागतिकत्वात् अद्वैतं नोपपद्यते कथमितिचेत् जगति मिथ्याभूते सति मिथ्यात्वस्य जगदाश्रितत्वमस्तु आश्रयमन्तरा वृत्तित्वाभावात् शिवे वर्तत इत्युक्ते शिवस्सत्यरूपस्तन्न घटते ननु मिथ्यात्वमेव सत्यमित्युक्ते शिव एकः सत्यं तच्चैकं सत्यमिति सत्यद्वये जाते एकमेवेति श्रुतिविरोधापत्तिः अपिच मिथ्याया मिथ्येत्युक्ते सत्य-

---

विध भेद । परिकल्पितविशेष । सांगितले तरी ॥८१॥ होय विरोध श्रुतीसि। त्याकारण आत्मब्रह्मासि । सर्वदा सर्वांसि । निजऐक्यसत्य ॥८२॥

पुढील ओव्या कानडी पुस्तकाच्यां आधारें केल्या आहेत.

### तत्त्वार्थ.

ओव्याः—यानंतर श्रुत्याचार्यनिजानुभवासिद्ध । युक्तिसम्मतअशेध । तत्पदार्थशिवलिंगशुद्ध । हेंचि त्वंपदार्थ जीवलिंग ॥१॥ इति तत्त्वंपदार्थ । दृढतर सिद्धार्थ । प्रमाणें करूनि सिद्धान्त । केला असे ॥२॥

### मिथ्यात्वाविरोध.

ओव्याः—नंतर विशेषणांशद्वैतास । मिथ्यात्व सांगूनि त्यास । सत्यभूत विशेषचिन्मात्रास । ऐक्य सांगितलें तरी ॥१॥ अद्वैतसिद्धि बोलती । तरी मिथ्यात्वासि गति । नसोनि अद्वैतसिद्धिरीति । कैसी प्रवर्तेल ॥२॥ त्यासि उत्तर । देती सज्जन थोर । वेदांतज्ञानसमुद्र । ऐका सावधानें ॥३॥ जग मिथ्या जरि । मिथ्यात्वासि आश्रयभूत होतें तें कैसे परि । कारण मिथ्यात्वाश्रय मिथ्याकारि । अनुभवसिद्ध ॥४॥ शिवस्वरूपीं मिथ्यात्व जरि । आहे ऐसे ह्मणतिलें तरी । अघटित जाणा नानापरि । कारण शिवस्वरूप यथार्थ ॥५॥ मिथ्यात्व सत्य ह्मणतिलें तरी । मिथ्यात्व आणि शिव दोनी जरि । पदार्थद्वय सत्य होते तरी । एकमेवा श्रुतिसि वि-

मिथ्ययोरेकस्य सत्यत्वमुक्ते अन्यन्निषेध्द्वयं एकस्मिन् मिथ्याभूते सत्यन्यत्सत्यं भविष्यति एवं शुक्तिरजतं दृष्ट्वा इदं रजतं वा न वेति संदिह्यानंतरं निश्चिन्वतोऽनुभवे सति प्रपंचे मिथ्याया अस्तित्वं यदि प्रपंचस्य सत्यत्वं तर्हि सत्याद्वैतस्य हानिरिति चेन्न दूरस्थं गजं दृष्ट्वा अश्वो वा महिषो वा इति संदिहानस्य हालिकस्य अयं न महिष इति निश्चये सति अनंतरं मातंगे तुरंगत्वं यथा सत्यं न भविष्यति तथा मिथ्याया मिथ्यात्वं न विरुध्दं पुनस्तत् मिथ्या न भूत्वा सत्यस्वरूपतया कदापि न तिष्ठति कथमिति चेत् अलीकं वस्तु निश्चयवद्भासमानमप्यन्ततो व्यलीकं व्यलीकमेव भवति व्यलीकस्य स्वरूपं कदापि निश्चयत्वेन न भासते तस्माज्ञानाविकारतया भासमानद्वैतनाशे सति तद्ज्ञानमपि वन्योऽग्निर्वनं दग्ध्वा स्वयमपि नष्टो जात इव नाशं गच्छति अपिच तदाश्रयीभूतं प्रथमं तदधिष्ठानमिति विदितं शिवचैतन्यमेकमेव सत्यमित्युक्तौ कापि हानिर्नास्तीति वाढं भवति

---

रुद्ध होय ॥६॥ मिथ्यात्व मिथ्या आहे ऐसें ह्मणतिलें तर । मिथ्यात्व सत्यत्व द्विप्रकार । त्यांत एक सत्य होऊनि साचार । दुसरें मिथ्या हें सिद्ध ॥७॥ शुक्ति देखिल्यावरी । रजताचा संशय येईल जरी । अनुभव्यासि शुक्तिज्ञान ठरी । रजतज्ञान जाय ॥८॥ तैसें जगतीं मिथ्यात्व वसुनी । मग जातें लय होऊनी । जगतेंचि सत्य राहुनी । अनुभवासि येत ॥९॥ त्यानंतर जग एक सत्य । आणिक शिव एक सत्य । ऐसें पदार्थद्वय । सत्याद्वैतासि हानि आणिती ॥१०॥ या प्रश्नासि उत्तर । वेदाधार देती थोर । तो ऐकावा साचार । सावधानपणें ॥११॥ दूरस्थ गज देखुनि । अश्व महिषइति संभव आणुनि । महिष नव्हे ऐसा निश्चय करूनि। अश्वत्वाचा निश्चय ॥१२॥ जैसे सत्य न होतें त्यापरि । मिथ्यात्व मिथ्या झालें तरी । विरोध परिहारि । अनुभवें जाणा ॥१३॥ आणिक तें मिथ्या न होऊनि । त्याचें स्वरूप सत्य न ह्मणती कोणी । ऐशा या शंकेलागुनि । उत्तर देती पै ॥१४॥ मिथ्याभूत पदार्थ । कैसा तो होईल यथार्थ । त्याकरितां असंबद्धप्रलाप व्यर्थ। करूं नये ॥१५॥ नाना विकारें भासमान द्वैत । गेलियावरि तद्ज्ञान जात । वनोद्भवोग्निकूट । वन जाळिल्यापरि ॥१६॥ नष्ट होऊनि सर्व। आश्रयमात्र परशिव सत्य होऊनि सावयव । तो केवळ राही ॥१७॥

## सति मिथ्याज्ञाने सत्यसिद्धिः

अनंतरं सकलप्रपंचस्य मिथ्यात्वप्रतिपादकवेदान्तपक्षे श्रुतिविचारेणैवं सत्यात्मकमुक्तिघटना कथमित्युक्ते भ्रांतस्वप्नवनितासंभोगादिसत्यवीर्यपतनादिकं कल्पितशिलाभैरवदेवताभजनेन तथ्यसंपदादिसिद्धिः अयथार्थदर्पणप्रतिविंबादिभिः सत्यलावण्यदर्शनवदसत्यश्रुतिवाक्येन परमार्थमोक्षसिद्धिर्भवति ननु विंबप्रतिविंबयोरैक्येन अयथार्थत्वमनुपपन्नं न च चैत्रतत्प्रतिविंबाविति भेदानुभवेन उभयोरैक्यं कथमिति जलादौ चैत्रमुखप्रतिविंबः चैत्रमुखाद्भिन्नो भवितुमर्हति। चैत्रमुखवृत्तिधर्मविरुद्धस्वाभिमुखत्वादिधर्मवत्वात् मुखांतरप्रतिविंबवदिति वाच्यं दर्पणे मम मुखं पश्यामीत्यनुभवेन ग्रीवास्थमेवेदमिति तस्मिन् ग्रीवास्थत्वतदाश्रयाभेदयोर्नास्ति दर्पणे मुखमिति तदंभाववैशिष्ट्यस्य तस्मिन्मुखत्वसंसर्गस्य चानुभवेन त्वत्पक्षेप्यनेकप्रत्ययाप्रामाण्यात् एवंजातीयानेकाकारदंतकेशादिप्रत्ययानामप्रामाण्यप्रसंगः धर्मिकल्पनागौरवं चानेकदूरदेशस्थतया प्रतीयमाननक्षत्राभ्रादिप्रतिविंबोत्पत्तिज्ञप्तिकारणाभावाच्च तस्मात्स्पष्टदंतादिना प्रसिद्धच्छायाविलक्षणे तस्मिन् च्छायारहितादित्यादेरपि प्रतिविंबदर्शनाच्च विंबचेष्टाधीनचेष्टतया छायाशब्दो गौणः युक्तयुक्त्येव न मुखान्तरमपीति विंबमुख एव दर्पणस्थभिन्नत्वं स्वाभिमुखत्वं चारोप्य दर्पणे मुखमित्यनुभवति। न च प्रतीत्यनुरोधेन दर्पणे शुक्तिरजतवन्मुखांतरमस्तीति वाच्यम्। प्रतीतेरन्यथाह्युपपत्तेः। दर्पणे ग्रीवास्थमेवेदं मुखं पश्यामि नात्रमुखमिति संसर्गं प्रतिषिध्य प्रसिद्धमुखाभेदानुभावात् अन्यथा नेदं रजतमितिवत् नेदं मुखं ममेत्यनुभूयतेतिचेत् विंबप्रतिविंबयोरैक्येन तथ्यत्वेऽपि तद्वत् स्वाभिमुखत्वादिधर्माणां भ्रांतत्वेन यथा

---

### मिथ्याज्ञानानें सत्यसिद्धि.

ओव्याः—आणिक सकळ प्रपंचजाति। तयासि मिथ्यात्व सांगे वेदान्ति। त्या श्रुतिविचारें सत्य कैसी निजमुक्ति। घडे ह्मणतिलें तरी ॥८३॥ भ्रांति स्वप्नवशें करूनि। वनितादिक संभोगाचेनि। वीर्यस्खलित स्वप्नीं। होय सत्य ॥८४॥ कल्पित शिळाभैरवादि। देवतामंत्र भजनविधि। सत्य संपादनें विशुद्धि। होय निरुति ॥८५॥॥ यथार्थ नव्हे दर्पणांत। प्रतिबिंब सत्य। मुखलावण्यें अत्यंत। साद-

र्थत्वमुक्तं सत्यात्मकमुखलावण्यादीनि यथा दृष्टानि भवन्ति तथा मिथ्यात्मकश्रुतिविचारेण परमार्थमुक्तिसिद्धिर्भवति ॥

## निरंजनत्वसिद्धिः

अनंतरं प्रणववाच्ये शिवे जगज्जन्मादिकारणे सति तस्य ज्ञानेन शुध्दचिन्मात्राज्ञानजन्यदुःखस्य नाशः कथं भवति इत्युक्तौ शुक्तिविषयकज्ञानाभावेन भासमानं प्रातिभासिकरजतं शुक्तिज्ञानमंतरा स्फटिकज्ञानेन यथा न नाशं गच्छति तथा परशिवज्ञानमंतरा जगन्नष्टं न भवति पुनः स परशिवो ज्ञानविषयश्चेत् अवाङ्मानसगोचरत्वभंगः सविशेषत्वापत्तेश्च इष्टापत्तौ निष्कलं निरंजनं शिवं शान्तमिति श्रुतिवाक्यभंगः स्यात् तेनैवं सिध्दांतितमसमंजसमित्युक्ते मधुरा रुचिः सम्यगस्ति इत्युक्तौ यथा सम्यक्त्वं तदनतिरिक्तं एवं सच्चिदानंदैकस्वरूपं परब्रह्मशिवचैतन्यं जललेपरहितपुष्करपलाशवत् दूरीकृतद्वैततया निर्लिप्तं तस्मिन् शिवे निरंजनत्वं निर्दिष्टम् प्रथमं सर्पतया ज्ञातवस्तुनि रज्जुरित्याप्तवचनापरोक्षवत् यो जगतां हेतुस्सन् मायया

---

श्य होय ॥८६॥ तैसें प्रणवात्मक श्रुतिमत । विचारें झालिया परमार्थ । वरि परब्रह्म नित्यमुक्त । सत्यस्वभावसिद्ध * ॥८७॥

---

* यानंतर प्रणवार्थ शिवाकार । जगज्जन्मादि कारणपर । याचें ज्ञान श्रेष्ठतर। तेणें दुःख कैसें जाय ॥१॥ या शंकेसि उत्तर । ऐकावें चित्त करुनि स्थिर । दृष्टान्त देउनि श्रेष्ठतर । सांगिजेल ॥२॥ शुक्तिज्ञानहीनासि । रजत ऐसा होतो भास । शुक्तिज्ञान नसुनि स्फटिकज्ञान जरि त्यास । तरी रजताभास न जाय ॥३॥ त्यापरि शिवज्ञान झाल्यावांचून। दुःख नाहीं जात निघून । हेंचि असें सत्यजाण। श्रेष्ठ परमार्थ ॥४॥ ज्ञानविषय शिव ह्मणतिलें तरि । अवाङ्मानसगोचरत्व श्रुतिभंगपरि । आणिक सविशेषत्वापत्ति खरि । दोषद्वय येतील ॥५॥ इष्टापत्ति ह्मणतिले तरी । निष्कल निरंजनशिवशांतश्रुतिवैखरी । या श्रुतीसी विरोध येतील जरि। तत्सिद्धांत नष्ट होय ॥६॥ मधुर असुनि चांगुलें आहे । येथें दोनी गुण जैसे अभिन्न पाहे । तैसे ज्ञानविषय ज्ञान राहे । निर्विकल्प होऊनि ॥७॥ निर्विकल्पवृत्तिनें निराकार जरि । निश्चेष्ट स्वयंप्रकाश होतो तरि । सच्चिदानंद शिव त्यापरि। कमलपत्रवन्निर्लिप्त जाणा ॥८॥ ऐसें तें परशिवज्ञान। होतें गुरुपदेशें करून । जैसें

सहितः परमेश्वर इति ज्ञातः स निरुपाधिकनिरंजनाद्वितीयपरब्रह्मशिवो निर्गुणलिंगमिति वेदांतवाक्यजन्यशब्दापरोक्षेण दुःखनिवृत्तिरिति ज्ञानाज्ञानयोस्समानविषयकत्वमस्तीति सिद्धान्तमनवद्यम् ॥

## निर्गुणसाधनम्.

पुनः तस्मिन् ब्रह्मणि लोकन्यांयसहकृतानुमानादिभिः सगुणे सति निर्गुणत्वसिद्धिर्न घटतेत्युक्तौ शास्त्रयोनिर्ब्रह्म साक्षी चेता केवलो निर्गुणश्चेत्यादिश्रुतिप्रमाणेन शब्दैकमेयं भवति अनेन वादिकल्पितानुमानप्रमाणं निरस्तं तेन ब्रह्मादिब्रह्मविद्यासंप्रदायकर्तृषु परशिवोपदिष्टमतमनुसृत्य निस्संशयं स्थितेषु सत्सु तेषां निर्गुणसिध्द्या निःश्रेयोरूपकैवल्यसिध्दिर्भवति ॥

## ज्ञानस्य प्रतिबंधकः

अनन्तरं परब्रह्मचैतन्यभूतनिर्गुणशिवज्ञानं प्रपंचभाननाशमन्तरा न सिध्यति पापशेषेण द्वैतभ्रांतिसंशयविशिष्टप्रवृत्तिकर्मजडानां भविनां सत्संगत्या मुक्तिलाभाय सत्कर्मदीक्षाशिवध्यानमानसपूजादिरेव कारणम् तदभाव एव ब्रह्मविद्यायाः प्रतिबन्धकः

---

आप्तवाक्य शुक्तिज्ञान । त्यापरि जाण ॥९॥ ऐसें हें परब्रह्मज्ञान । त्वरितें महादुःखनिरसन । हा सिद्धान्त यथार्थ जाण । कालत्रयाबाधित ॥१०॥

### निर्गुणसाधनें

ओव्याः—परब्रह्म तें आणिक । न्यायानुमानानें सांगती लोक । सगुण ऐसे कितिएक । निर्गुणत्व अघटित ह्मणति ॥१॥ या भविसि अनुभवी देती उत्तर । तत्क्षणि हे होती पलायनपर । कारण परब्रह्मपर । शास्त्रयोनि ह्मणती ॥२॥ ऐसा शिव शब्दैकमेय होऊन । सिद्धान्ती ठरतो निर्गुण । साक्षी चेता हें शास्त्रप्रमाण । जाणा निस्संशयें ॥३॥ ऐसें असतां वादिकल्पितानुमान । कैसें होईल तें प्रमाण । याकरितां ब्रह्मविद्यासांप्रदायें करोन । निर्गुणसिद्धि निस्संशयें ॥४॥

### ज्ञानासप्रतिबंधक.

ओव्याः—यानंतर परब्रह्मज्ञानासी प्रतिबन्धक । प्रपंचभानकारण हें मुख्य । येणें करून पापशेषें भविलोक । द्वैतभ्रांतिनें बुडती ॥१॥ ऐशा या प्रवृत्तिकर्मकर्त्यांस । घडावा सत्सहवास । तेणें होईल मुक्तिवास । तदभाव मुक्तिप्रतिबन्धक ॥२॥

( या ओव्या कानडी पुस्तकाच्या आंधारें केल्या आहेत. )

## मोक्षस्य विघ्नत्रयम्

अनंतरमज्ञानसंशयविपर्यया एव मुक्तेस्त्रयो विघ्नाः तेष्वहं न ब्रह्मेति भेदभ्रमकारणमज्ञानमुच्यते अहं ब्रह्म न वेति वृत्तिः संशयः श्रुतियुक्तिभिर्निरसनीयः श्रुतिस्तु पूर्वोक्तमहावाक्यादिकं युक्तिस्तु एकस्मिन्नेवात्मन्युपाधिभेदेन जीवत्वब्रह्मत्वोपपत्तौ प्रतिशरीरमात्मभेदकल्पने गौरवं नच नाहमीश्वर इति प्रत्यक्षमेव भेदे प्रमाणमिति वाच्यं चंद्रप्रादेशकत्वभ्रमवच्छास्त्रजन्यज्ञाने बाधसंभवात् प्रत्यक्षं न प्रमाणं नाप्यनुमानं प्रमाणं जीवो ब्रह्मभिन्नः ब्रह्मधर्मसर्वज्ञत्वविरुध्दसर्वज्ञत्वाभावादिधर्मवत्वात् घटवत् सर्वज्ञत्वाभावविशिष्टजीवधर्मः न सर्वज्ञत्वादि विरुद्धः आत्ममात्रवृत्तिधर्मत्वादीश्वरत्वादिवद्भेदानुमाने हेतुरसिद्धः। अव्याप्यवृत्तित्वेन विरोधाभावाज्जीवो ब्रह्मैव। आत्मत्वात् ब्रह्मवन्न वेदस्मृत्यादिप्रमाणं प्रत्यक्षसिद्धभेदानुवादकत्वादनुवादकानां स्वार्थे तात्पर्याभावात्॥ श्लोकः॥ उपास्ते देवतामन्यामन्योऽसावन्य इत्यहं॥ यो जानाति पशुर्ज्ञेयस्तथान्तरकृतः सतः॥भीतिरस्तीति वेदार्थे विचारेण विनिंदनात्॥ श्रुतियुक्तिभिरहं ब्रह्म भवामि चेत् पूर्वसिद्धजीवभावो ममास्तीति यत्तदेव विपरीतमुच्यते

## विघ्नत्रयपरिहारः

अनंतरं श्रवणमनननिधिध्यासनानि क्रमेणाज्ञानादीनां त्रीणि विरोधीनि तेषु श्रुतिविचारेण सूतकादिषु दृढबुद्धिसद्भाववत् प्रत्यगात्मब्र-

---

### मुक्तिविघ्नत्रय.

ओव्याः—आणिक असंभावना संशय। विपरीत ह्मणोनि होय। मुक्तिसी विघ्नत्रय। त्याचे ठायीं ॥८८॥ मी ब्रह्म आपण। सर्वथा नव्हे ह्मणोन। बुद्धिसी धारण। ते असंभावना ह्मणवी ॥८९॥ मी ब्रह्म होय न होय। ह्मणोनि उभय। बुद्धिते संशय। ह्मणवी जाणिजे ॥८९०॥ श्रुतियुक्तीनें मी जरी होय ब्रह्म। तरी माझा जीवभाव प्रथम। गेला नाहीं ह्मणोनि बुद्धिविषम। ते विपरीत ह्मणवी ॥९१॥

### विघ्नत्रयपरिहार.

ओव्याः—आणि श्रवण मनन। निदिध्यास ह्मणोन। परिक्रमें तया अज्ञान। विषयीं विरोधत्रय ॥९२॥ त्याचे ठायीं। आप्तवाक्यश्रवणें सूतकासि। दृढबुद्धि जैसि। तैसें प्रत्यगात्म ब्रह्मयासि। ऐक्य ह्मणोनि ॥९३॥ उपनिषद्वाक्य विचारण।

ह्मणोरैक्यविषयकोपनिषद्वाक्यतात्पर्यावधारणानुकूलव्यापारश्रवण- मित्युच्यते तादृशश्रुत्यर्थविषयकयुक्त्यनुचिंतनसंपत्तिर्मननं श्रवणमन- नाभ्याम् निश्चितेऽर्थे विजातीयज्ञानासंवलितसजातीयमनोवृत्तिलक्ष- णधीधारापरंपरैव निदिध्यासनमुच्यते ।

## सहकारिकारणम्

अनंतरं श्रवणोत्पन्नवेदान्तवाक्यांतर्गतपदार्थज्ञानेनात्मसाक्षात्कारो जायत इति अत्र द्वेधा श्रवणेन शुद्धज्ञानं परोक्षरूपं प्रथमं जायते तादृ- शश्रवणमनननिदिध्यासनादिसहितमनसात्मसाक्षात्कारो जायतइत्या- चार्यवाचस्पतिचरणाः वेदान्तवाक्यश्रवणेनैव ब्रह्मात्मैक्यसाक्षात्का- रो जायतइति विवरणाचार्यश्रीपादाः तेषामयमाशयः ! इंद्रियजन्यज्ञानं न प्रत्यक्षं अनुमित्यादावतिव्याप्तेर्नचेंद्रियत्वेनेंद्रियजन्यज्ञानं अपरोक्ष- जन्यतावच्छेदकालपरिचर्यान्नच प्रत्यक्षत्वजातिः जन्यतावच्छेदिका ईश्वरीयप्रत्यक्षेति प्रसक्तेः नच समवायकालिकसंबंधाभ्यां प्रत्यक्षत्व- जातिरनतिप्रसक्तेति तथेति वाच्यं तदपेक्षयानुभवत्वजातिः समवाय- कालिकसंबंधस्वाश्रयपरोक्षज्ञानभेदाश्रयतासंबंधैरिंद्रियजन्यतावच्छे- दिकास्तु किं विशेषेण प्रत्यक्षत्वेन सामान्यस्य लघुत्वादविद्यातिरिक्त- जडजातौ मानाभावाच्च तस्य भावस्त्वतलाविति पाणिन्याचार्यसूत्र- स्येव भावप्रत्ययार्थसत्तापरत्वात् चैतन्याभिन्ना साच निराधारा तदु- क्तं वाक्यपदीये भगवता भर्तृहरिणा ॥ श्लोक ॥ संबंधिभेदात्सत्तैव भि-

---

तात्पर्यार्थावधारण । तेंचि श्रवण । ह्मणवी निरुतें ॥९४॥ तया श्रुतिचिया । अर्थ- युक्ति करूनिया । चिंतनयुक्त अतिशया । तें मनन ह्मणवी ॥९५॥ तया श्रवणम- ननांत । निश्चितार्थासि कृतार्थ । निश्चळ होऊनि असणें निवांत । तो निदिध्यास ह्मणवी * ॥९६॥

## सहकारिकारण.

ओव्याः—आणिक येथें श्रवण । मनन उभयां करून । उत्पन्न ज्ञान । होय नि- रुतें ॥९७॥ तयाज्ञानें साचार । होय आत्मसाक्षात्कार । श्रवण मुख्य होऊनि वर ।

---

* श्रवणें असंभावना दूर होय । मननें संशयनिवृत्ति होय । निदिध्यासें वि- परीतभावनाजाय । हें ज़ाणा विघ्नत्रय परिहार ॥

द्यमाना गवादिषु॥ सा जातिः सा महानात्मा तामाहुस्त्वतलादयः ॥ तस्मादपरोक्षार्थविषयत्वमेव ज्ञाने अपरोक्षत्वमर्थस्य चापरोक्षत्वं नाम अनावृतसंवित्तादात्म्यं संविदस्तु सत एव यत्साक्षादिति वाक्यतासंवित्वमेव संविदोपरोक्षत्वं सा च संविदेकैव ननु इंद्रियसंप्रयोगजन्यत्वाभावात् कथमपरोक्षत्वमिंद्रियसंप्रयोगश्च संयोगः संयुक्ततादात्म्यं *संयुक्ततादात्म्यतादात्म्यं तादात्म्यं तादात्म्यतादात्म्यं* एतदन्यतमजन्यत्वाभावादिति चेन्न प्रत्यक्षमात्रे संयोगस्याहेतुत्वात् सुखादिप्रत्यक्षे स्वाप्निकप्रत्यक्षे व्यभिचारात् मनसो ज्ञानपरिणामत्वेन सकलप्रमाणसहकारित्वेन प्रमाकरणत्वाभावात् मनो न प्रमाणं ज्ञानोपादानत्वात् आत्मवत् मायावत् मायासद्भावे प्रमाणं न जानामीत्यनुभवः घटध्वंसाजनकघटापरोक्षज्ञानं घटं न जानामीत्यनुभवविषयानिवर्तकं घटापरोक्षप्रमाणज्ञानत्वात् घटध्वंसाजनकघटापरोक्षप्रमाणज्ञानवत् तस्माद्वेदान्तशब्दजन्यब्रह्मात्मैक्यविषयकं ज्ञानमपरोक्षमेव अपरोक्षार्थविषयकत्वात् नच शब्दजन्यज्ञानसर्वं परोक्षमिति सकलतंत्रसंमतव्यवहारानुपपत्तिः अपरोक्षार्थविषयकान्यशब्दज्ञानमेव परोक्षं दशमस्त्वमसीत्यादिवाक्यजन्यमपि तथाश्रवणमेव मुख्यमित्यनेन अंगीत्युच्यते मनननिदिध्यासने श्रवणस्य सहकारिणीति अमुख्येति अंगभेदः यथा स्वर्गकर्मिकभावनायां ॥ करणीभूतो ज्योतिष्टोमादियागो मुख्यतया अंगीफलकरणत्वेन श्रवणात्फलवत्संनिधानफलं तदंगमिति न्यायेन दीक्षणीयाग्निष्टोमीयस्य पश्वादयोऽमुख्यतया सहकारितया चांगानि तथा प्रकृतेऽपि तत्कथमित्युक्ते अर्थप्रकाशकस्य दीपस्य चंचलावस्थायां कार्यसामर्थ्यं नास्तीत्यनंतरं वायुसंचारस्याच्छादकपटबंधनवत् मननं दीपस्य वर्तिकां सरलतया चोदयित्वा प्रज्वलंत्तद्वत् वर्तमानं निदिध्यासनं भवति ॥

---

अंगी ह्मणवी ॥९८॥ मनन निदिध्यासातें । साहायकारी होय निरुते । त्याकारणें मुख्य न होय परितें । अंग होय ॥९९॥ तो कैसा पै अर्थ । ह्मणतिले परि यथार्थ । परिहरदृष्टांत । मुखें तया ॥९००॥ प्रकाशक झालिया दीपकातें । चंचल अवस्था जरि वर्ते । तरी कार्यें सर्वार्थें । समर्थ नव्हे ॥१॥ तयाकारण पवन । संचारा लागून । असें बांधलें आच्छादन । जयावरि ॥२॥ मनन तें तैसें । वाति सारूनि जैसें । प्रज्वलित करूनिया ऐसे । निदिध्यास ह्मणवी ॥३॥

## श्रुतितात्पर्यनिर्णयलिंगानि

अनंतरं श्लोकः ॥ उपक्रमोपसंव्हारावभ्यासोऽपूर्वताफलम् ॥ अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये ॥ एवंभूतानि शास्त्रार्थनिर्णयस्यानुकूलानि षड्विधानि तात्पर्यलिंगानि ॥ श्लोकः ॥ सृष्टेः पूर्वपरं ब्रह्म सदेवासीज्जगत्रयम् ॥ ब्रह्मणः स्वगतानेकभेदगंधाभ्यवारयन् ॥ अखंडैकरसानंदबोधकृद्वागुपक्रमः ॥ नामरूपात्मजगतो लयं कृत्वा तदात्मनि ॥ प्रत्यगात्मपरात्मैक्यबोधयद्वाक्यमंतरम् ॥ ब्रह्माद्वयं बोधयद्यदुपसंव्हाररूपकम् ॥ उपक्रमोपसंव्हारावेकं लिंगं न तु द्वयम् ॥ तत्वंपदार्थयोरैक्यमसकृव्द्बोधयद्वचः ॥ अभ्यास उच्यते सद्भिर्लोकमानाद्यगम्यता । अपूर्वतेति विज्ञेया पुनर्ब्रह्मैक्यबोधतः । सर्वविज्ञानसंप्राप्तिः फलमित्युच्यते बुधैः ॥ पुनः प्रत्यङ्गनिर्विकारब्रह्मणः सुस्थितस्य च ॥ गतिरेका चिंतनीया इति न्यायः प्रवर्तते ॥ सृष्टिप्रलयसंरक्षाजगतोऽथ प्रवेशनम् ॥ नियमं चेति यत्पंचकर्तृत्वं भासयद्वचः ॥ भूतार्थवादो निश्चेयो-

---

## श्रुतितात्पर्यनिर्णयलिंग.

ओव्याः—आणिक उपक्रमउपसंहारता । अभ्यास अपूर्वता । फळअर्थवाद तथा । उपपत्ति ॥४॥ ह्मणोनि विशेध । श्रवणासि षड्विध । लिंगतात्पर्य संबंध । त्याचे ठायीं ॥५॥ प्रथम सृष्टींतें । सकळजगातें । सद्रूपब्रह्मतें । असें ह्मणोनि ॥६॥ त्या ब्रह्मासि स्वगतभेदत्रय । निरसुनि अखंडैकरसमय । प्रतिपादक निश्चय । तो उपक्रम ह्मणवी ॥७॥ नामरूपात्मक जगत । तें लिंगस्थापुनि ब्रह्मा आंत । प्रत्यगात्मा ब्रह्मसंयुक्त । एकत्व बोधी ॥८॥ परब्रह्मअंतीं । एको अद्विती । ह्मणोनि धारि श्रुति । तो उपसंहार ह्मणवी ॥९॥ उपक्रम ह्मणोनि । उपसंहार ह्मणोनि । उभय मिळोनि । एकेक लिंग ह्मणवी ॥१०॥ प्रत्यगात्मासि आपण । तोचि ब्रह्म ह्मणोन । सांगणें पुनः पुनः । तो अभ्यास ह्मणवी ॥११॥ प्रत्यगात्म्यासि यथार्थ । प्रत्यक्षादिप्रमाणअंत । सांगणें तत्वनिश्चितार्थ । ते अपूर्वता ह्मणवी ॥१२॥ आत्मा एक जाणावया योग्यता । तो जाणत असे सर्व पदार्था । ह्मणोन सांगणें यथार्थतें फळ ह्मणवी ॥१३॥ आणिक प्रत्यगात्मारूप । निर्विकार स्वरूप । त्यासि स्थिति संगति इति निश्चयरूप । न्याय असे ह्मणोन ॥१४॥ जगताचे सृष्ट्यादि अनुप्रवेशांत । झाले जे पंचीकृत । कर्तृत्व सांगणें तें अद्भुत । अर्थवाद ह्मणवी ॥१५॥ मृत्तिकाघटातें । ऊर्णनाभितंतूतें । निमित्तनिरुतें । ह्मणवी जैसें ॥१६॥ तैसें ब्रह्म-

ह्यर्थवादविदांवरैः पुनरुद्रनाभ्यादेर्दृष्टान्ता उपपत्तयः । इति सिद्ध-
लिंगषट्कं शास्त्रं ब्रह्मोपदेशनम् ॥

## मननसामग्री

अनंतरं युक्तितर्कानुमानान्येव मननसाहायानीत्यात्मानोऽनेके व्याप-
का इति सांख्यादिमते तेषां समस्तानामात्मनां प्रत्येकशरीरेषु संबंधो-
ऽस्तीत्यनेन अस्येदं शरीरं भोगसाधनं नान्येषामिति भोगस्थितिर्वक्तुं
न घटते यत्र वास्य सुकृताधिक्येन संपादितमितीदं शरीरमस्यैवेति अ-
न्येषां नेत्युक्ते सुकृतादिकमन्येषां नास्ति किमित्युक्तावनंतरमस्य पूर्वदे-
हाभिमानेन कृतसुकृतादिकमस्यैवेत्युक्ते सोऽभिमानः पूर्वदेहस्थानेका-
त्मनां नास्ति वा किमनंतरमेवं सर्वसांकर्ययुक्तानवस्थादूषणं निवार-
यितुमशक्यं तत्कथमित्युक्ते आत्मानः सर्वे अनादयस्संतो जाता इत्य-
नंतरमेकात्मपक्षे भोगव्यवस्था न संभवतीति नानात्मपक्षमाश्रयतीति
चेदेवं भोगस्थितिघटिता न जाता अनंतरमुभयमतेऽपीयं शंका समाने-
त्युक्ते एकात्मपक्षे विंबप्रतिविंबन्यायेनोपाधिभूतांतःकरणस्य कंपकालु-
ष्यादिनानात्वात् विचित्रभोगस्थितिस्सुलभेति युक्तियुक्ता अनंतरं त-
त्कार्यानुमानयोर्लक्षणं चेद्धर्षमिश्राचार्यादीनां खंडनादौ (खंडनखा-
द्यादौ) प्रसिद्धमस्तीत्यनेनेदं सुखानुभवप्रकरणं भवतीत्यनेन ग्रन्थबा-
हुल्यभीत्या प्रतिपादनं न कृतं श्रीहर्षमिश्रैः खंडनशास्त्रे तर्को निराकृत-

---

तें आपण । जगतासि कारण । ह्मणोनि सांगणें निर्वचन। ते दृष्टांत ह्मणवी ॥१७॥

## मननसामग्री

ओव्या आणिक युक्ति तर्क।अनुमान ह्मणोनि पृथक् । मननासि मुख्य । सहकारिक
॥१८॥ त्याचे ठायीं । आत्मा अनेक होऊनि । व्यापक ह्मणोनि सांख्यादि करूनि
मतवादिया ॥१९॥ समस्त आत्म्यासि । प्रत्येक शरीरासि । असे संबंध तयासि
तयाकारण ॥९२०॥ हियासि हें शरीरभोग साधन । अनेकासि न होय ह्मणोन
सांगणें भोगस्थितिमान । तें अघटित ॥२१॥ आणिक कवण एक । प्रकारें वि-
शेख । निमित्त सुकृतादिक । सामग्रीचेनि ॥ २२ संपादनें करून हें शरीर याचि
लागून । अनेकासि नाहीं ह्मणोन । ह्मणतिलें तरीं ॥२३॥ तें सुकृतादिककारण
सामग्रिसंपादन । सकळ आत्म्या लागून काये नसे ॥२४॥ आणिक याचिया पूर्व
संचित । देहाभिमानें करावया योग्य सुकृत । झालें असें अनुचित । ह्मणतिलें तरी
॥२५॥ तो देहाभिमान । पूर्वदेहीं असोन ॥ अनेक आत्म्या लागून । काय न

कथमित्युक्ते ॥ श्लोकः ॥ व्याघातो यदि शंकास्ति न चेच्छंका ततस्त-राम् ॥ व्याघाता वधिराशंका तर्कः शंकावधिः कुतः ॥ इत्यादिना दूषिते मणिकारादिभिरेवं ( चिंतामणिकारादिभिरेवं ) समर्थितं पर्वतो व-न्हिमान् धूमवत्वादित्यत्र हेतुरस्तु साध्यं मास्त्विति शंकायां यदि व-न्हिर्न स्यात्तर्हि धूमोपि न स्यादिति तर्कं वन्ह्यभावधूमाभावयोर्व्याप्य-व्यापकरूपतर्को दर्शितः तर्कश्च व्याप्यापत्तिजन्यव्यापकारोपरूपः तत्र व्याप्तावप्रयोजकत्वशंकायां पुनस्तर्कप्रदर्शने तत्राप्येवं तत्राप्ये-वमिति शंकादोषेण मूलव्याप्तिसिद्धिरेव न स्यात्तथा चानवस्थादोषः क्वचिद्व्यभिचारशंकायां कोटिस्मरणादिविरहे शंकानुदयः क्वचित्तर्का-दिति नानवस्था धूमाग्न्योर्व्याप्यव्यापकभावाभावे धूमो वन्हिं वि-नाऽपि स्यात्तदा वन्हिजन्यो नस्यात्तत्राप्यप्रयोजकशंकायां धूमा-र्थं वन्हौ प्रवृत्तिर्न स्यादित्यादिस्वकार्यव्याघातदंडभयेन तयोर्व्याप्य-व्यापकभावोंगीकरणीय इति तर्कविचारः सुखानुभवप्रकरणे कठिण इत्युपेक्षितः अनुमानं बिंबप्रतिबिंबभावेनेश्वरजीवभाव उक्तस्तत्रोपाधौ सति स लभ्यते उपाधिस्तु माया सा च भावाविद्याविमतं प्रमाणज्ञानं स्वप्रागभावातिरिक्तस्वविषयावारकस्वविषयाधिष्ठानाध्यस्तस्वनिव-र्त्यवस्त्वंतरपूर्वकमप्रकाशार्थप्रकाशत्वात् आरोपितावारकावृतवस्तु विषयकत्वाद्वा अपवारकस्थतमोभ्रांतिनिवारकापवारकस्थविषयकप्र-माणज्ञानवदित्यादिप्रदर्शनं कठिणमित्युपेक्षितं अनुमानलक्षणमपि व्या-प्तिपक्षतादिलक्षणज्ञानज्ञेयमिति च

---

॥२६॥ इतुकें सर्वसांकर्य । अनवस्था दूषणमय । निवारावया निश्चयें । शक्य तें कैसें ॥२७॥ सर्वात्म्यें अनादि सिद्ध । असति त्या कारणें साध्य। अनेक विशेध । आत्मपक्षीं । भोगव्यवस्था नव्हे अशक्य । ह्मणोनि नानात्मक पक्ष । आश्रुनी पृ-थक । भोगस्थिती न घटे ॥२९॥ आणिकहि या । मतांत उभया । सांख्य ह्मणिजे तया । समाधान तें कैसें ॥०३०॥ एक आत्मपक्षांत अतिशयें । बिंबप्रतिबिंबन्या-यें । अंतःकरण उपाधियुक्तमय । तयापासाव ॥३१॥ कंपकलुषादिक । नानात्व-दर्शनें अनेक । भोगस्थिती पृथक । ह्मणिजे युक्ति ह्मणवी ॥३२॥ आणिक तर्क अनुमान । झालें तरी तल्लक्षण । हरुषमिश्राचार्यापासाव खंडन। होय प्रसिद्ध ॥३३॥ ग्रंथ वहु विस्तीर्ण । होईल ह्मणोन । भीतीनें प्रतिपादन । केलें संक्षेपमात्रें ॥३४॥

## निदिध्यासपंचयोगाः

मंत्रयोगःस्पर्शयोगो भावयोगाभावयोगौ महायोग इत्युक्ता एव नि-दिध्यासनरूपयोगाः पंच तेषु प्रणवादिमंत्रानुसंधानेन परमात्मनि म-नोलयोभवन्नेव मंत्रयोग उच्यते पुनस्तन्मंत्रयोगसहितः सन्मनःपवना-वेकतया मिलित्वा मूलाधारे सुषुम्नामार्गे गत्वा शिरोगतपरमात्मतेज-सि लीयत इति यत्स लय एव स्पर्शयोग उच्यते ॥ वृत्तं ॥ स्वर्गोमूर्धा-दिशो याः श्रवणसुयुगलं चंद्रसूर्यौ च नेत्रे वन्हिर्वक्रं च नाभिक्षितिर-विचरणौ यस्य देवस्य शंभोः ॥ वैराजं रूपमेकं सकलमुनिनुतं चिंत-यित्वाथ साक्षाद्बाहुप्राप्तास्त्रभूषापरिमितवपुषा दिव्यमूर्तिर्विभाव्या॥ अनंतरं तदवयवानां मध्ये एकमेकमवयवं विसृज्य शिष्टावयविमात्रस-द्रूपब्रह्मणि मनोलयो भावयोग उच्यते ॥ चू. ॥ पुनः सकलप्राणिभिर-भिलषितधीसमुत्पादकसंभाषणादानादिप्रवर्तकचक्षुरादिवागादींद्रिय-लक्षणकरणगोचरे विश्वविचक्षणजेगीयमाननिगमांतेतरविलक्षणनाना-जडवस्तुविषयीकरणचातुरीधुरीणानुमानादिप्रमाणातीते निस्तरंगवा-रिनिधिसमानसहजानंदानुसंयायिसमाधिविरोधिमायाद्युपाधियोगा-तीते जगज्जन्यस्थेमलयतिरोधानानुग्रहकरणपंचमूर्तिस्तूयमाने परब्र-

---

### निदिध्यासनपंचयोग.

ओव्याः–आणिक मंत्रयोग स्पर्शयोग। भावयोग अभावयोग महायोग। ह्मणिजे निदिध्यासनरूपयोग । पंचक त्याचे ठायीं ॥३५॥ प्रणवादि मंत्रानुसंधानोपायें। परमात्मयाचिये । ठायीं मनोलय होय । तो मंत्रयोग ह्मणवी ॥३६॥ तया मंत्रयोग संयोगेंकरून । मनपवन एकवटून । मूळाधारें प्रवेशोन । सुषुम्नानाडिमार्गं ॥ ३७॥ शिरोमध्यगत । परमात्मदिव्द्रीप्त । मनोलयहोयतयाआंत । तो स्पर्शनयोग ह्मणवी ॥३८॥ प्रथमस्वर्गी ते साचार । मूर्ध्नि दीशा ते श्रोत्र। चंद्रार्क ते नेत्र । अग्नि तें मुख ॥३९॥ अंतरिक्ष नाभि भूमि पाद । ईश्वराचे अगाध । विराट्रूप सिद्ध । स्मरोनिया ॥१४०॥ नातरी पंचवक्र । दशभुजा नानावस्त्र । आभरण नंदीश्वर । आदि दिव्यमूर्ति ॥४१॥ यथाशक्ति परिभाऊनि । मग तयाचे प्रतोनि । एकएक त्यजुनी । अवयव ॥४२॥ उरलें निरवयव मात्र । सद्रूप ब्रह्म अविकार । मनोलय होय तदाकार । तो भावयोग ह्मणवी ॥४३॥ कारण गोचर होय । प्रमाणातीत असे अप्रमेय । तये निरुपाधिक ब्राह्मि मनोलय होय । तो अभावयोग ह्मणवी ॥४४॥ जग उदयोलयाचे ठायीं । जाणणें नेणन्या त्यासमर्यी । आपणासि कव-

ह्मणि मनोलयो ह्यभावयोगः समुज्जृंभतं पुनः ॥ श्लोक ॥ लोकोदयलयद्वंद्वे विज्ञातृज्ञातृभावयोः ॥ स्वस्य हानिर्न चास्तीति सदेकाकाररूपके ॥ प्रत्यगात्मब्रह्मलिंगे महायोगो मनोलयः ॥

## प्रतिबंधकत्रयम्

अनंतरं भूतप्रतिबंधवर्तमानप्रतिबंधागामिप्रतिबंधा एव आत्मसाक्षात्कारस्य त्रयः प्रतिबंधकाः तेषु मोक्षापेक्षया सर्वसंगपरित्यागं कृत्वा श्रीगुरुं प्राप्य श्रवणादिकं कृत्वापि पूर्वं गृहस्थाश्रमे स्वीकृतवनितादिवस्तूनां रूपयौवनशृंगारादिसद्गुणानुभवस्य रुचिरेव संस्कारफलेनागत्यागत्य मनसि स्थित्वा पदे पदे चिंतामुत्पादयन्ती आत्मसाक्षात्कारमसंपादयन्ती विद्यमानैव भूतप्रतिबंधकरीत्युच्यते पुनः श्लोक—जडबुद्धिजंतुसंगरतिर्विषयकस्तथा ॥ कुतर्कश्चाभिमानश्च चापल्यं षट्प्रकारतः ॥ विद्यंते यस्य चैतानि कृते तत्त्वविचारणे ॥ जनयंती न तस्यात्मसाक्षात्कारमिति स्थितिः ॥ प्रतिबंधो वर्तमानो विघ्नरूपो महानयम् ॥ अग्रे जन्मांतरप्राप्तिं विना नाशगते नहि॥ च्चिरारब्धविशेषेण ब्रह्मलोकादिवां-

---

णही । बाधा नसतां ॥४५॥ एकचि प्रकारें असणें । प्रत्यगात्मा ब्रह्मरूपी धरणें । मनोलय होय तेणें । तो महायोग ह्मणवी ॥४६॥ इति निदिध्यास पंचकलक्षण ॥

## प्रतिबंधकत्रय.

ओव्याः—आणिक भूतप्रतिबंध । वर्तमानप्रतिबंध । आगामिप्रतिबंध । ह्मणिजे इति ॥४७॥ त्रिविधप्रकार प्रतिबंध साचार । आत्मसाक्षात्कार । त्यासि विरोध होऊनि असे ॥४८॥ त्याचे ठायीं । मोक्षापेक्षेनें सर्वसंग । करुनि परित्याग श्रीगुरुपावोनचांग । तयामुखें ॥४९॥ श्रवण जरी झालें । पारि प्रथम गृहाश्रमीसमेळें । वनितादिवस्तुरूप स्वीकारिलें । यौवनशृंगारादि ॥५०॥ षड्गुण अनुभवाची गोडी । संस्कारगुणें पुनः पुनः आवडी । येऊनि मनासि पवाडी । वासनारूपें ॥५१॥ निमिषनिमिषासी असे प्रेरित । आत्मसाक्षात्कार प्राप्त । होऊं नेदी तो भूत । प्रतिबंध ह्मणवी ॥५२॥ आणिक जडबुद्धि जडसंग रति । अतिविषयासक्ति । कुतर्क अभिमान चपळमति । व्याकुळता उपजूनि ॥५३॥ तत्वविचारासि असे विघ्नकरीत । आत्मसाक्षात्कार प्राप्त । घडो नेदी तो वर्त । मान प्रतिबंध ह्मणवी ॥५४॥ आणिक पुढें किती एक अनेक । नसे जन्मांतर । प्रालब्ध विशेषाकार । ह्मणोनिया ॥५५॥ ब्रह्मादिलोक वांच्छित । दोषद्वयायुक्त । होऊनि असे वेदार्थ । जाणति-

च्छया ॥ दोषद्वयसमावेगाद्वेदार्थज्ञानवत्यपि ॥ साक्षात्कारासंभवोऽत्र भावी स्यात्प्रतिबंधकः ॥

## प्रतिबंधनिवर्तकसाधनानि.

अनंतरं बंधत्रयं जेतुं ज्ञानवैराग्योपरतयो मुख्यसाधनीभूताः ॥ अंत्यजन्मनिअभ्यासं यः करोति तदभ्यासकरणे तत्कारणस्वरूपकार्याण्येव त्रीणि लक्ष गानि क्रमेण प्रत्येकं प्रत्येकं वक्ष्ये ॥

## ज्ञानलक्षणम्

तत्कथमित्युक्ते ज्ञानस्य श्रवणादिकमेव कारणं भवति। आत्माहंकारयोरध्यासैक्यपृथग्विवेचनं स्वरूपं भवति । अनंतरमहंकारगतसंसारसाक्षित्वमेव कार्यं भवति ॥

## वैराग्यलक्षणम्.

अनंतरं वैराग्यस्य वनितादिविषयाणामनित्यत्वादिदोषदर्शनमेव कारणं भवति। उपरि केनापि प्रकारेण तत्परित्याग एव स्वरूपं विषयप्राप्तिराहित्यमेव कार्यं भवति ॥

---

ला तरी ॥५६॥ आत्मसाक्षात्कारप्राप्ति । घडों नेदी सर्वार्थी । तो आगामिप्रतिबंध ह्मणवी ॥ ५७ ॥

## प्रतिबंधनिवर्तक.

ओव्याः—आणिक ते प्रतिबंधत्रय । जिंकावया उपाय । असे ज्ञानवैराग्य। उपरति ह्मणिजे ॥५८॥ मुख्य साधन अतिशय । अभ्यास करावया । लागून कारणस्वरूपकार्य । ह्मणोनिया ॥५९॥ त्रयत्रयलक्षण । अनुक्रमें करून । विशेष भिन्नाभिन्न । सांगिजेल ॥६०॥

## ज्ञानलक्षण.

ओव्याः—ज्ञानासि मुख्य । श्रवणादिक। आपण विशेख। कारण ह्मणवी ॥६१॥ आत्माहंकाराभिमत । अध्यासैक्यत्व । भिन्न करूनि दाखवीत। तें स्वरूप ह्मणवी ॥ ६२ ॥ अहंकारगत । संसारासि साक्षित्व । तें कार्य ह्मणवीत । असे निरुतें ॥ ६३ ॥

## वैराग्यलक्षण.

ओव्याः—आणिक वैराग्यातें । वनितादि विषय अभिमतें । अनित्यत्वदर्शन तें। कारण ह्मणवी ॥६४॥ उपरि कवण । एक उपायें करून । अहंकारनिरसन। तें स्वरूप ह्मणवी ॥६५॥ आणिक ते विषयसंगसोय । विषपरिन्यायें । लंपट न होय। तें कार्य ह्मणवी ॥ ६६ ॥

## उपरतिलक्षणम्

अनंतरमुपरतेर्यमनियमाद्यष्टांगयोग एव कारणं भवति। चित्तस्यांतरंगमध्ये एकाग्रतावाप्तिरेव स्वरूपं भवति। पुनर्बाह्यकर्मणि आभिमुख्यताराहित्यमेव कार्यं भवति ॥

## ज्ञानादीनामवधयः

तेषु देहात्मभावप्राप्तिवत् ब्रह्मैव स्वयमिति दृढबुद्धिर्ज्ञानस्यावधिर्ब्रह्मलोकादिप्राप्तेस्तृणीकारो वैराग्यस्यावधिः॥ सुषुप्तिवत् सकलकार्यविस्मरणमेवोपरतेरवधिर्भवति ॥

## मोक्षकारणम्.

तेषां ज्ञानवैराग्योपरतित्रयं सिध्यतीति चेत् तेषां तन्महातपःफलं भवति तत्कथमित्युक्ते वैराग्योपरतिद्वयसंपूर्णसद्भावेऽविज्ञानराहित्यं चेत्तस्य मुक्तिर्न घटते महासुखस्थानीभूतोर्ध्वलोकप्राप्तिर्भवति पुनर्ज्ञानसद्भाववतो वैराग्योपरत्यभाववत्तस्य वृक्षाग्रशाखाभग्नतासमये तत्र-

---

## उपरति.

ओव्याः—उपरति लागून। यमनियमादिकरून। अष्टांगयोग आचरण। तें कारण ह्मणवी ॥६७॥ चित्ताभ्यंतर। मुखें परतोनि स्थिर। असणें एकाग्र। तें स्वरूप ह्मणवी ॥६८॥ आणिक वाहेर। कर्मांवरी अनादर। वासना न मोहे तदाकार। तें कार्य ह्मणवी ॥६९॥

## ज्ञानादिकांस अवधि.

ओव्याः—त्याचे ठायीं। देहात्माभाव अध्यास जैसे। ब्रह्म आपण ह्मणोनि तैसें। दृढ बुद्धिभाव अध्यास विशेषें। ते ज्ञानावधि ह्मणवी ॥९७०॥ इहलोकादिसमस्त। ब्रह्मलोकपर्यंत। सकळ तृणवत्। ते वैराग्यविधि ह्मणवी ॥ ७१ ॥ सुषुप्ति ऐसी रीति। सकळ कार्यजाती। विस्मरण ते उपरती। अवधी ह्मणवी ॥७२॥

## मोक्षकारण.

ओव्याः—आणिक तयामध्यें ज्ञान। वैराग्य उपरति ह्मणोन। त्रयलक्षण निपुण। असलें तरी ॥७३॥ तया पुरुषासि अत्यंत। महातपाचें अनाश्रित। फळ जाणावें सत्यार्थ। तें तैसें असे ॥७४॥ वैराग्यें उपरति उभय। असतीं जरी पूर्णमय। ज्ञान एक नाहीं तरी निश्चय। मुक्ति न घडे ॥७५॥ परि महासुख। स्थान उर्ध्वलोक। प्राप्ति विशेख। होय तयासि ॥७६॥ ज्ञान एक असोनि। वैराग्य उपरति दोन्हीं। नाहीं पुरुषा लागूनि। जेणें न्यायें ॥७७॥ वृक्षाग्रीं बळ घालिया पु-

स्थमनुजस्य पतनेच्छाभावेऽपि पतनवद्देहावसाने मुक्तिर्भवति प्रारब्धजनितदुःखानुभव एक एवेति सिद्धम् ॥

### सप्तभूमिकाक्रमः

अनंतरं सुखेच्छाविचारणातनुमानसीसंसक्तिसत्वापत्तिपदार्थभावनातुर्यगामिताः सप्त ज्ञानभूमिकाः तास्वहं मूढो भूत्वा वर्ते अत एव श्रुतिगुरुभ्यां ज्ञातव्यमित्येतच्छुभेच्छोच्यते ॥ उपरि गुरुशास्त्रजनितकिंचिद्वैराग्येण सदाचारप्रवृत्तिरेव विचारणेत्युच्यते ॥ अनंतरं सुखेच्छाविचारणयोर्बलेन विषयासक्तिपरित्याग एव तनुमानसीत्युच्यते उपर्युक्तभूमिकात्रयस्याभ्याससामर्थ्येन जाग्रत्प्रपंचं सर्वमपि स्वप्नवत्परिदृश्य आत्मनः सन्मातृत्वानुसंधानमेव सत्वापत्तिरुच्यते सकलप्रपंचाभानं विदित्वा सुषुप्तिवदात्मचिन्मात्रावशेषित्वमेव संसक्तिरुच्यते अनंतरं सर्ववासनाविलयेन गाढनिद्रितवदानंदात्मलीनतैव पदार्थभावनेत्युच्यते उपर्यस्ति नास्तीत्यनुच्यमानेऽहंकृतिनिरहंकृत्यरू-

---

रुपा । वृक्षशाखा भंगलिया जैसा । मध्यें निराधार सरसा । लोंबत असे ॥७८॥ पतनाअनिछा परि । पडेल साचोकारि । तैसें देहावसान झालियावरी । मुक्ति निश्चयें ॥ ७९ ॥ प्रारब्धजनित । दुःखानुभवसंघात । जोंवरी देह वर्तत । तोंवरी सत्य ॥ ९८० ॥

### सत्यभूमिकाक्रम.

ओव्याः—आणिक सुखेच्छा विचारण । तनुमानस संसक्तिसत्वापत्ति । पदार्थभावनि तुर्यगामि ह्मणोनि । चेतोनि आत्मविषयीं ॥८२॥ श्रुतिगुरुवाक्यासमतें। आपुलिया निजस्वरूपातें । जाणावया बुद्धि प्रवर्ते । ते सुखेच्छा ह्मणवी ॥ ८३ ॥ वरि गुरुशास्त्र प्रमाण करून । जनित किंचित् वैराग्यसाधन । सत्य सदाचार वर्तन । ते विचारण ह्मणवी ॥८४॥ ते सुखेच्छाविचारण । उभयाबळें करून। विषयासक्तिनिरसन । ते तनुमानसा ह्मणवी ॥८५॥ वरि भूमिका त्रयाचेनि। अभ्याससामर्थ्यें करूनि । जगत्प्रपंच उभारणि । सकळ जडाजड ॥८६॥ स्वप्नतुल्य ह्मणोन । जाणोन आपण । वरि आत्म सन्मात्र संनिधान । ते सत्वापत्ति ह्मणवी ॥८७॥ सकळ दृश्यजाति । प्रपंचाचे ठायीं विरती । शुषुप्त्यात्मक जेणें स्थिती। तेणें न्यायें ॥८८॥ आत्मसच्चिन्मात्र । विशेषतत्त्व तत्पर । रत असणें निरंतर । ते संसक्ति ह्मणवी ॥८९॥ सर्व वासनाहरासें । आनंदातु गाढ निद्रिस्ता ऐसें । गुणलीन असणें आत्मसमरसें । ते पदार्थभावना ह्मणवी ॥ ९९० ॥ नुपजतां अस्ति-

हितकेवलज्ञप्तिरूपाद्वैतपदे अवकाशस्थितरिक्तघटवत् अंतर्बहिश्शून्यतया वर्तमानत्वमेव तुर्यगामीत्युच्यते

## षट्समाधयः

पुनस्तदुपरतेरनुसारिणो दृश्यानुवेधशब्दानुवेधनिर्विकल्पा इत्युच्यमाना बाह्याभ्यंतरभेदेन षट्समाधयस्तेषु घटादिविषयजातमध्ये यत्किंचिल्लक्षीकृत्य तस्य नामरूपात्मकमायांशौ द्वौ परित्यज्य पुनस्तन्मध्येऽस्तिभातिप्रियात्मसच्चिदानंदब्रह्मांशान् त्रीन्संदधातीति यत्तद्बाह्यदृश्यानुवेधरूपः सविकल्पसमाधिरुच्यते पुनरखंडसच्चिदानंदाद्वितीयरूपमेव ब्रह्मेति ध्यातव्यतैव बाह्यशब्दानुवेधात्मकसविकल्पसमाधिरुच्यते उपरि समाधिद्वयाभ्यासबलेन जातब्रह्मानंदास्वादने मनो मग्नंभूत्वा निस्तरंगसमुद्रवन्निश्चलात्मकतया वर्तत इति यत् तदेव बाह्यनिर्विकल्पसमाधिर्भवति अनंतरं मनोगतकामसंकल्पादिकमेव दृश्यं स्वयं तस्य साक्षीत्यनुसंधानमेवाभ्यंतरदृश्यानुवेधलक्षणसविकल्पक-

---

नास्ति । अहंकृति निरहंकृति । विरहत केवळ ज्ञप्ति । स्वरूप अद्वैतपदी ॥९१॥ चिदाकाश अंतरबाह्य । व्यापून अचळ अक्षय । होऊनि असणें शून्यमय । ते तुर्यांगामी ह्मणवी ॥९२॥

## षट्समाधि.

ओव्याः—आणिक ते । उपरति ते । अनुकूळ निरुते। जालि असे ॥९३॥ दृश्यानुवेध शब्दानुवेध । सविकल्प निर्विकल्प विषेध । बाह्यांतर होऊनि भेद । असे षड्विधसमाधि ॥९४॥ त्याचे ठायीं । घटादिक विषयजाति आंत । झालें सहज अथवा कृत। कवण एक ते नामरूप ॥९५॥ निरसूनि मायाअंश उभय । त्यामध्यें अस्तिभातिप्रिय । ह्मणिजे सच्चिदानंद त्रय । ब्रह्मअंश ॥९६॥ घेऊनि करणें अनुसंधान । तें बाह्यदृश्यानें । वेधसविकल्प आपण । समाधि ह्मणवी ॥९७॥ अखंड सच्चिदानंद अद्वितीय । ब्रह्मस्वरूप रसमय । ह्मणोनि प्रेमप्रिय । ध्यानयोजी ॥९८॥ तें बाह्य दृश्यानुवेधक । सविकल्पक । समाधिमुख्य । ह्मणवीतसे ॥९९॥ वरि समाधिद्वयाचेनि । अभ्यासबळें करूनि । ब्रह्मानंद ध्यानीं । मन मग्न होऊनि ॥१०००॥ निस्तरंगसागरन्यायें । निश्चलात्मक होऊनि स्वयें । असणें तेचि बाह्ये । निर्विकल्प समाधि ह्मणवी ॥१॥ आणिक मनोगतकारक । कामसंकल्पादिक । तयासि आपण साक्षिक । ह्मणोनिया ॥२॥ अखंड अनुसंधान । तें आभ्यंतर दृश्यान । वेधस विकल्प आपण । समाधि ह्मणवी ॥३॥ असंग सच्चिदानंद स्वप्रकाश

समाधिः पुनरसंगसच्चिदानंदस्वप्रकाशाद्वयं स्वरूपमेव स्वयमिति चिंतनकरणमेवाभ्यंतरशब्दानुवेध इति सविकल्पसमाधिरुच्यते पुनस्तादृशस्वानुभूतिरसादेशेन दृश्यशब्दौ द्वौ परिशिष्य निवातस्थितदीपवन्निस्पंदरूपतया वर्तनमेवाभ्यंतरनिर्विकल्पसमाधिरुच्यते ॥ श्लोक ॥ षड्भिः समाधिभिर्योगी कालं नयति यो महान् ॥ तस्य यत्र मनो याति तत्र तत्र समाधयः ॥

## ज्ञानफलचतुष्टयम्

श्लोक॥दुःखाभावः सर्वकामप्राप्तिस्तु कृतकृत्यता ॥ प्राप्यप्राप्तित्वमेतद्धि फलरूपचतुष्टयं ॥ तेषु दुःखाभाव इहपरलोकभेदेन द्विप्रकारो वर्तते तेषु स्थूलशरीरे कुरूपित्वदुर्गंधत्वव्याधयः सूक्ष्मशरीरे प्रतीयमानाः कामक्रोधादयः कारणदेहे आधिव्याध्योर्बीजभूतसंस्कारा इति त्रिविधसंताप इह लोके दुःखं भवति तेषु मिथ्यात्मकमायाकार्यात्मकशरीरादिभ्यो विविक्ताद्वितीयप्रत्यगात्मज्ञानोपरिपारमार्थिकभोग्यभोक्तृवि-

---

अद्वयनिर्द्वंद । स्वरूपनिजबोध । तें मी ह्मणोनि ॥४॥ अखंड वृत्यवधारण । तें अभ्यंतर दृश्यान । वेधसविकल्प आपण । समाधि ह्मणवी ॥५॥ स्वानुभूति रसेचिनी । दृश्यशब्द उभय निरसुनी । निवांत स्थानीं । दीपकन्यायें ॥ ६ ॥ निष्यंद स्वरूप । होऊनि असणें अपोआप । ते आभ्यंतरनिर्विकल्प । समाधि ह्मणवे ॥ ७ ॥ इति षट्समाधियुक्त । योगेश्वर सर्वगत । काळकर्म विचरत । असे निरुतां ॥ ८ ॥ तयाचें मन जेथें जेथें । जाये तेथें तेथें । तयासि समस्त । समाधिस्थिती ॥ ९ ॥

## ज्ञानफलचतुष्टय.

ओव्याः—आणिक दुःखाभावत्व । सर्वकामासि कृतकृत्यत्व । प्राप्तिप्राप्यत्व । ह्मणोनि ज्ञानफल चतुर्विध ॥१०१०॥ त्याचे ठायीं । दुःखाभाव ह्मणिजे इह । परलोक उभय । तयांत विभेदमय । होऊनि असे ॥११॥ तयामध्यें स्थूलदेहीं विशेषत्व । कुरूपत्व दुर्गंधत्व । व्याध्यादिक बाधकत्व । अनेकविध ॥१२॥ सूक्ष्मतनूसि बाधक । दिसे कामक्रोधादिक । शोकमोहादि अनेक । वासनामये ॥१३॥ कारणतनूसि संगत । आधिव्याधि बीजभूत । झाली अति बळवंत । संस्कार ह्मणिजे ॥१४॥ ऐसा हा त्रिविध संतापकारक । इहलोक दुःखदायक । होऊनि असे मुख्य । त्याचे ठायीं ॥१५॥ मिथ्यात्मक मायाकार्य । झालें शरीरादिज्ञेय । तयासि विलक्षण अद्वितीय । प्रत्यगात्मा ॥१६॥ त्यासि ज्ञानप्राप्ति वरि सांग । झाले

रहे सति ज्ञानिनस्तदुःखत्रयसंबंधाभाव इह लोके दुःखाभाव उच्यते ॥ पुण्यं कथं प्राप्यते पापं कथं निवारणीयमिति चिंता परलोकदुःखं भवति तत्र सम्यग् ज्ञानानंतरं कमलपत्रोदकवत् ज्ञानिनः कर्मद्वयलेपो नास्तीति काष्ठे वन्हिर्वर्तते वन्हौ काष्ठाद्यभाववत् कर्मद्वयव्यवहारे विवेकी वर्तते तस्मिन्व्यवहाराभावे सति दावानलशिखाक्रान्ता गगनं ये केऽपि मृगपक्षिणो यथा न प्रविशन्ति तथा ज्ञानिनामिदं सुकृतदुष्कृतादिकं संवध्दुमशक्यमिति तेन चिंताज्ञानविहीनता च परलोकदुःखाभाव उच्यते ॥

## कामाप्तिः

पुनः सर्वैश्वर्यसंपन्नसार्वभौमादिहिरण्यगर्भांता उत्तरोत्तरतया अपेक्षणीयाः शतगुणोत्तरानंदाः सर्वेऽपि निस्पृहविवेकिनः सन्त इत्यनंतरमानंदाः सर्वेऽपि ज्ञानिना परिज्ञातब्रह्मांशा इत्यनेन तस्याखंडानंदसिद्धिरस्तीति यत्तत्सर्वकामाप्तिरुच्यते ॥

---

परमार्थ संग। तयाकारणें भोग्य। भोक्तृनव्हे ॥१७॥ ह्मणोनि ज्ञानियासि तें दुःखत्रयसंबंध कांहीं एक । नसे ह्मणोनि इहलोक । दुःखाभाव ह्मणवी ॥१८॥ आणिक पुण्य कासिनि साधे । पाप कासिनि छेदें । ह्मणोनि उभयचिंता संबंधें । परलोक दुःखमय होय ॥१९॥ तेथें सम्यग्ज्ञानसुख । झालें ह्मणोनि विशेख । पद्मपत्रोदक। संगन्यायें ॥१०२०॥ ज्ञानिया आपण । कर्मद्वयालागून । अलिप्त होऊन । असे दुःखसंशय ॥२१॥ जैसा काष्ठांत वन्हि वसे । परि त्या वन्हींत काष्ठ नसे। तैसा कर्मद्वय व्यवहार असे । विवेकिया ॥२२॥ परि तो व्यवहार । तयास साचार । नसे लेशमात्र । सर्वथैव ॥२३॥ जैसा दावाग्निनें आवरिला पर्वत । तयांत मृगपक्षिआश्रित । तैसा नातळे । सुकृत दुष्कृत । ज्ञानाग्निदग्धपुरुष ॥२४॥ त्या कारणें चितातुर निशेख । लेशमात्र कांहीं एक । नाहीं तें परलोक दुःख । अभाव ह्मणवी ॥ २५ ॥

## कामाप्तिः

ओव्याः—आणिक सर्व ऐश्वर्य संपन्नादि । सार्वभौमादि । हिरण्यगर्भांत पदि । उत्तरोत्तर ॥२६॥ योग्य होऊनि वांछसि । असे शतगुणोत्तर विशेषीं । तो सकलानंद निस्पृही विवेकियासि । असे ह्मणोनि ॥२७॥ अखिलानंद ज्ञानिया । जाणे प्रगटलें अतिशया । ब्रह्मांश ह्मणोनिया । तयालागीं ॥२८॥ तयासि संततोदित। आनंदसिद्धि अखंडित । झाली आपणांत। असें तो सर्व कामाप्ति ह्मणवी ॥ २९ ॥

## कृतकृत्यता

श्लोक ॥ पुनर्विवेकिनस्तत्त्वज्ञानात्पूर्वं समासतः ॥ ऐहिकेष्टपरिप्राप्त्यै स्वानिष्टस्य निवृत्तये॥कृषिवाणिज्यकर्मादिस्वर्गसिध्द्यै मखादिकम् ॥ उपासनादिसत्कर्ममोक्षार्थज्ञानसिद्धये॥ श्रवणादिकमित्यादिकर्तव्यं त्रिविधं मतम् । अद्वैततत्त्वविज्ञानानंतरं चेद्भवार्जिते ॥ फलभोगे कामनाया विरहे कृषिमुख्यगः ॥ व्यापारो नेति तत्पश्चाद्गवाक्षगतसूर्यगे॥ किरणेऽण्वादिसंक्रीडा प्रकाशो बहिरातपे॥यथा नास्ति तथा स्वल्पज्ञानगम्यक्रियादिकम्॥सम्यग्ज्ञानेन भात्येव तेनानुष्ठेयवर्जने ॥ यागादिवांच्छा नो भाति पश्चाद् ब्रह्मसुखात्मनः ॥ साक्षात्कारे च संजाते सर्वं तच्छ्रवणादिकं ॥ कृतप्रायं भवत्येतत्कृतकृत्यत्वमुच्यते ॥

## प्राप्यप्राप्तिः

पुनः स्वीयविशिष्टार्थपुण्यैकं परिपाकतः ॥ उपास्यत्वमुमुक्षुत्वशास्त्रीयश्रवणस्य च ॥ आत्मानात्मविवेकस्य तदज्ञाननिवृत्तितः ॥ आत्म-

---

### कृतकृत्यता.

ओव्याः—आणिक अविवेकिया तत्वप्राप्ति । विण प्रथमहि लोकस्थिती । संबंध अनिष्ट निवृत्ति । इष्टकामाप्तिकारण ॥ १०३० ॥ कृषिवाणिज्यादिक । स्वर्गादिक सुख । भोगसिद्धिदायक । कारण योग उपासना ॥३१॥ परि मोक्षसाधन । अनर्घ्य ज्ञान । सिद्धिकारण । श्रवणादिक ॥ ३२ ॥ ह्मणिजे त्रिविध । कर्तव्यविशेष । मुख्य होऊनि प्रसिद्ध । असे निरुतें ॥३३॥ तत्वज्ञान झाल्यावरि विशेष । संसारिक फळभोग इच्छा मुख्य । नसे ह्मणोनि कृत्यादिक । व्यापार नाहीं ॥३४॥ गवाक्षगत । रविकिरण आंत । दिसे परमाणु तेथ । न प्रकाशीं न दिसे ॥३५॥ अल्पज्ञानियासि तैसे । हें विषयकर्म सरिसें । सम्यग्ज्ञानामध्यें न दिसे । ह्मणोनिया ॥३६॥ अनुष्ठानातें । योग्य नव्हे निरुतें । यागादिक वांछेतें । नसे तयासि॥३७॥ आणिक ब्रह्मानंद । साक्षात्कार बोध । हा जाला साध्य । ह्मणोनिया ॥ ३८॥ श्रवणादिक समस्त । सकळ कृत्याकृत्य । अभिप्राय सत्य । ते कृतकृत्य ह्मणवी॥३९॥

### प्राप्यप्राप्ति.

ओव्याः—आपणासि मुख्य । विशिष्ट पुण्यपरिपाक । मुमुक्षुत्व गुरु उपास्तिक । शास्त्रश्रवण ॥१०४०॥ आत्मनात्मविवेक । निवृत्ति अज्ञानादिक । आत्मसाक्षात्कार संसारदुःख । निरसन सकळ ॥४१॥ श्रुत्यार्थ निश्चय । महावाक्ये विश्वास-

साक्षात्कृते संसारदुःखादिनिवृत्तितः ॥ निजानंदस्य या सिद्धिः प्राप्यप्राप्तित्वमुच्यते ॥

## जीवन्मुक्तिः

जीवन्मुक्तिविदेहकैवल्यात्मकमोक्षद्वैविध्यं तस्मिन्विवेकिनोऽहमात्मनोरन्योन्यसंबंधलक्षणहृदयशिथिलताप्राप्तिमत्वेन परशरीरे यथा स्वशरीरेऽपि दृढाभिमानो नास्ति इत्यनुभवसाम्यवत्वेन प्रारब्धभोगसाक्षात्कारं मत्तसुप्तबालादिवत् मंदानुसंधानवत्वेन देहादिनिरभिमानतया घटोत्पत्यनंतरं कुलालचक्रभ्रमणवत् तत्प्रारब्धवासनावशेन जीववद्वर्तनमेव जीवन्मुक्तिर्भवति ॥

## जीवन्मुक्तिसंगतिः

॥ श्लोक ॥ ब्रह्मोपास्तिप्रसादेनोपास्तिको योपवित्तमः ॥ अरण्यवासी तपसा श्रद्धासिद्धिधुरंधरः ॥अर्चिर्लोकं महर्लोकं यक्षलोकमनंतरम् ॥ ऋतुलोकं मासलोकं वत्सराज्यमनुत्तमम् ॥ आदित्यलोकं चांद्रं च लोकं वैद्युतमुत्तमम् ॥ वारुणं देवनाथीयं लोकं वैधातृमुत्तमम् ॥ ग-

---

प्रिय । निजानंदसिद्धि अतिशय । ते प्राप्तिप्राप्यत्व ह्मणवी ॥४२॥

## जीवन्मुक्ति.

ओव्याः--आणिक जीवन्मुक्ति विदेह । कैवल्य ह्मणोनि मोक्षद्वय । विद्याआश्रय । त्याचे ठायीं ॥४३॥ विवेकियासि । अहमात्मा भावियासि । अन्योन्य उभयासि । संबंध लक्षण ॥४४॥ हृदयग्रंथि पावोनि शिथिल ती । परशरीराररिती । स्वशरीरीं ॥४५॥ दृढ अभिमान नसे । अनुभव सम्यक् झालासे । ह्मणोनि प्रारब्धदशें । भोगसाक्षात्कार ॥४६॥ सुप्तमत्तबालक पिशाच उन्मत्तक । त्यापरिमंदानुसंधानपूर्वक । होय त्यालागीं देहादिक । निरभिमानें ॥४७॥ घटोत्पत्तिवरि चक्रभ्रमण तैसें । तत्प्रारब्धवासना वसे । विचरत असे । तो जीवन्मुक्त ह्मणवी ॥४८॥

## जीवन्मुक्तिसंगति.

ओव्याः--आणिक ब्रह्मज्ञानोदय । झालिया नंतर सूर्य । उदयीं तम निःसंशय । निवृत्ति त्यायें ॥४९॥ अज्ञानसंयुक्त तत्कार्य । शरीरादिक निरशनमय । तेवि देहकैवल्य होय । निश्चयेसि ॥५०॥ परि मध्यें जीवन्मुक्त । कल्पना ते कैसी वर्तत । तयासि कवण दृष्टांत । ह्मणतिले तरी ॥५१॥ विवेकें रज्जूचे ठायीं सर्प । भ्रांति निरसलियावरि आरोप । असे नाव्हेक भयकंप । जयापरी ॥५२॥ तैसें ज्ञानाचेनि

त्वा मानवसंयुक्त उपास्तिसहितो जनः ॥ ततो गत्वा ब्रह्मलोकं दिव्यगं-धसमन्वितः ॥ दिव्यदेहादिसंपन्नो दिव्यभोगधुरंधरः ॥ सर्वाभीष्टसुख-प्राप्तिः सत्यसंकल्पसंगतः ॥ शिवसारूप्यसंपन्नो योगी तत्र च वर्तते। स एव जीवन्मुक्तः स्यात् यथा भूमौ तथाऽत्र च ॥ ब्रह्मज्ञानोदयोत्तरं सू-र्योदयेनांधकारनाशवदज्ञानेन सह तत्कार्यशरीरादिनाशे सति विदेह-कैवल्यं संभवति मध्ये जीवन्मुक्तिकल्पनं किमर्थमित्युक्ते विवेकेन र-ज्जौ सर्पभ्रांतिनाशेऽपि तत्कार्यभयकंपास्तित्ववत् ज्ञानेनाज्ञानविना-शेऽपि तत्कार्यशरीरादीनां स्थितिरस्तीति सद्भावे सति ब्रह्मविद्योत्प-त्तिसमकाले निःशेषमज्ञानेन सह देहपाते जाते ब्रह्मविद्यासंप्रदायवि-च्छित्तिर्भवति इति तथा चेत्किम् ॥ श्लोकः ॥ परेशेन ब्रह्मविद्यां ब्रह्मा-पादितवान्पुरा॥ प्रजापतिर्ब्रह्मणा च प्रजेशेन मनुर्मुनिः ॥ मनुना च प्रजाः सर्वा ज्ञातवत्य इमां पराम् ॥ इति ब्रह्मविद्यासंप्रदायप्रवर्तकपरंपरा-प्रतिपादकछांदोग्यादिश्रुतिविरोधो भवतीति ज्ञानिनो जीवन्मुक्तिसि-द्ध्यर्थं प्रारब्धकर्मवासना ज्ञानलेशसद्भावांगीकारेण देहस्थितिशिष्यो-पदेशादिकं सिद्धं भवति ॥

---

अज्ञानक्षय । परि तयाचें कार्य । देहस्थिति किंचितमय । असे ह्मणोनि ॥ ५३॥ ब्रह्मविद्योत्पत्ति काळीं तत्क्षणांत । निःशेष अज्ञानसंयुक्त । होवावा देहपात । ह्म-णतिलें तरीं ॥ ५४॥ ब्रह्म विद्येचिया । ज्ञानसंप्रदाया । लोप होईल ह्मणोनिया। समंध असे ॥५५॥ तें तैसें झाले तरी आणिक । परशिव सांप्रदायक । ईश्वरादि-क । ............... ॥ ५६ ॥ संप्रदायीशिवादिक । ईश्वरसंप्रदायी रुद्रादिक। रुद्रसंप्रदायी वैष्णवादिक । विष्णुसंप्रदायी ब्रह्मादिक ॥५७॥ ब्रह्मापासून संप्रदायक। प्राजापत्यादिक । प्रजापति सांप्रदायिक । ऋषीश्वर ॥५८॥ ऋषींपासून मनुसांप्रदा-यी । मनूपासून राजे सर्वही । षोडश महाराजापासून प्रवाही । ब्रह्मविद्या प्रगटली ॥५९॥ हे ब्रह्मविद्यासंप्रदाय । सांगितला परिपाय । छांदोग्य श्रुतिविरोध होय । तं-यालागीं ॥१०६०॥ तत्वज्ञा लागुनिया । जीवन्मुक्ति सिद्धि व्हावया । कारण हो-ऊनिया । प्रारब्ध कर्मवासना ॥६१॥ अज्ञान लेशमात्र । सद्भाव अंगिकार । क-रूनिया शरीर । स्थितिं असे ॥ ६२ ॥ तें कवण कृत्य । ह्मणतिलें तरी सत्यार्थ। शिष्योपदेश निमित्त । सिद्ध होऊनि असे ॥६३॥

## ज्ञानप्रभावः

पुनर्जीवन्मुक्तस्य संचितकर्मैव ज्ञानाग्निना तृणविशेषवत् दग्धं सद्गच्छति प्रारब्धकर्मलब्धं भुक्तं सज्जीर्यते आगामिकर्मैवानधिकारित्वेन परिसरणयुक्तं न भवतीत्यनुवादितुं युक्तम् ॥ ननु ज्ञानाग्निदग्धकर्मैव प्रारब्धभोगाय परिज्ञानेनाग्रे देहोत्पत्तिं कर्तुं युक्तमित्युक्ते भर्जितचणकादिबीजं भोगमात्रस्य योग्यमेव न त्वंकुरादिजननयोग्यं ज्ञानिनः कर्मप्रारब्धं भोगेन तीर्णं सत् जन्मांतरस्य हेतुर्न भवति इति ज्ञातव्यम् ॥

## जन्मावधिः

पुनः तत्प्रारब्धकर्म चेत् लोकयात्रादिकमनधिकृत्यास्मदादिनराणामेकस्मिन्नेव देहे भोग्यं भवति लोकयात्राधिकृतमनुव्यासादिमहापुरुषाणां दशसंख्याकदेहेन विना मोक्तुं न शक्यत इति ज्ञानस्य तिरोधानं नास्तीति बाल्यकौमारादिभेदसत्वेऽपि नरस्यैकदेहवदिति ज्ञातव्यम् ॥

---

## ज्ञानप्रभाव.

ओव्याः--आणिक जीवन्मुक्ताचें संचित। कर्म तें ज्ञानाग्निनें भस्मीभूत। होय जैसें तृण हुत। परि जाणावें ॥६४॥ प्रारब्धकर्म तें सरे भोगून। आगामि कर्म तें अनधिकारी होऊन। न विरूढे तयाकारण। क्रमें सांगितलें ॥ ६५ ॥ आणिक ज्ञानाग्नि दग्ध। झालें कर्म जें प्रारब्ध। तें भोगदायक सिद्ध। ह्मणतिले तरी॥६६॥ पुढें देहउत्पत्ति। होईल जरी ह्मणती। तरी तयासि निवृत्ति। कारणदृष्टान्त ॥६७॥ भाजले चण वटभोग्य। मात्रासिचि योग्य। परि अंकुरोत्पत्ति प्रयोग। कारण नाहीं ॥६८॥ तैसे ज्ञानाग्निदग्ध कर्मसंघात। प्रारब्धभोग तव न सरे सत्य। परि जन्मांतरासि नव्हे हेतु। ह्मणोनि जाणावें ॥६९॥

## जन्मावधि.

ओव्याः--आणिक तें प्रारब्ध। कर्म असे परि लोक। त्रयअधिकारदायक नव्हे। देहांत भोगुनी सरे ॥१०७०॥ लोकत्रयांत अधिकारिकृत्य। झाले मनुव्यासादिक महंत। पुरुषांसि दशसंख्या देहांत। भोग न सरे ह्मणतिलें तरी ॥७१॥ ज्ञानियासि तिरोधान। शक्ति नाहीं ह्मणोन। बालकौमारादिलक्षण। भेद असे ॥ ७२ ॥ ह्मणोति नरासी जैसा देह एक। तैसेचि व्यासादिकां दशसंख्य। देह एकादेहाऐसे मुख्य। त्यालागीं सांगितलें ॥७३॥

## ज्ञानिनो भोगसिध्दिः

अनंतरं सकलविषयाणां मिथ्यात्वं साधयतो ज्ञानस्य विषयाणां स-त्यत्वं संपादयता प्रारब्धभोगस्य चान्योन्यविरोधसद्भावे सति ज्ञानिनः तत्कथं भोगसिद्धिर्भवतीत्युक्ते मिथ्यात्मकस्वप्नेंद्रियजालेषु क्रमेण व-नितादिस्वर्गादिप्रकाशनैर्मैथुनादिविस्मयादिनिजभोगो भवतीतिवत् व्यावहारिकप्रारब्धभोगस्य विषयाणां सत्यत्वदर्शनसद्भावं विना न भवतीति नियमाभावे सति प्रारब्धभोगस्य ज्ञानस्य चान्योन्यविरोधो नास्त्यनेन ज्ञानिनः प्रारब्धभोगोऽस्तीति विदितं भवति ॥

## भोगदृष्टांतः

अनंतरमत्र भ्रांतिविनाशक्षणे शुक्तिरजतस्वरूपस्य हानिप्राप्तिवत् ज्ञानेनाज्ञानप्रलये जाते सति जगत्प्रकाशनाभावे सति विवेकिनः प्रार-ब्धभोगप्राप्तिः कथमित्युक्ते शुक्तिकारजतं निरुपाधिकभ्रमरूपतया तत्र नेदं रजतमिति बाधज्ञाने सति रजतस्वरूपस्य नाशो भवति। अस्मि-न्सोपाधिकभ्रमे तथा नास्तीति कथमित्युक्ते निर्मलवापीतीरे वर्तमाने

---

## ज्ञान्यास भोगसिद्धि.

ओव्याः--आणिक सकळ विषयत्व। तयासि साधित असे मिथ्यात्व। त्यांसि विषयासि सत्यत्व। संपादिलें तरी ॥७४॥ प्रारब्धभोगासि अन्योन्य। विरोध असे ह्मणोन। ज्ञानियासि भोगासिद्धि घटमान। ह्मणतिलें तरी ॥७५॥ मिथ्यात्मक स्व-प्न। इंद्रजालक्रम करून। वनितादि स्वर्गभुवन। भोग आभासे ॥७६॥ मैथुनादिविषय क्रीडा आनंदमय। अतिभोग स्थिती होय। तयाप्रकारें ॥७७॥ व्यवहारिक प्रार-ब्धभोगातें। विषयातें सत्यत्व। दर्शन होय नव्हे यथार्थ। हा नेम नाहीं ॥७८॥ प्रारब्धभोगासि। आणि विषयासि। अन्योन्य उभयासि। विरोध नाहीं ॥ ७९ ॥ तयाकारण। ज्ञानिया लागुन। प्रारब्धभोग असे ह्मणोन। विहितार्थ सत्य ॥ १०८०॥

## भोगदृष्टांत.

ओव्याः-.आणिक एक भ्रांति। नासतां तत्क्षणांत शुक्ति। रजतस्वरूपासि नि-वृत्ति। होय तैसें ॥८१॥ ज्ञानेंकरून। अज्ञान नासलें तत्क्षणिं। जगत्प्रपंच नय-नीं। दिसणें नाहीं ॥८२॥ विवेकियासि आपैसें। प्रारब्धभोगविशेषें। कैसा होतसे असे। ह्मणितलें तरी ॥८३॥ शुक्तिला रजत ह्मणिजे। निरुपाधिक सहजें। भ्रम होय विराजें। तयाकारणें ॥८४॥ जाणितलें तत्क्षणासि। रजत स्वरूपासि निवृत्ति आपैसे। होय अत्यंत ॥८५॥ तरीं तें सोपाधिक। भ्रमाऐसें नव्हे पूर्वक। तरीं तें

मत्स्यस्य जलेऽधोमुखो भूत्वा विद्यमानताऽसत्येति बुद्धिनिष्ठः सन् विद्यमानोऽप्यधोमुखत्वरूपं पुनःपुनः पश्यन्सन् वर्तत इतिवदहंकारसंबंधिजीवभावादिकमेव मिथ्या प्रत्यगात्मैव स्वयमिति विवेके सत्यपि जीवत्वादिप्रपंचो विद्यत इति जीवन्मुक्तस्य प्रारब्धभोगव्यवहारोंऽगीकृतो भवति ॥

## जीवन्मुक्तसद्गुणः

पुनस्तस्य जीवन्मुक्तस्य मैत्रीकरुणामुदितोपेक्षात्मकसद्गुणचतुष्टयमस्ति तस्मिन् सत्पुरुषैः सह स्नेह एव मैत्रीत्युच्यते दुःखात्मकेषु प्रीतिः करुणेत्युच्यते पुण्यकर्तृषु संतोष एव मुदितेत्युच्यते पापिषु रागद्वेषादिकविरह एव उपेक्षा भवति ॥

## जीवन्मुक्तप्रयोजनपंचकम्

अनंतरं जीवन्मुक्तस्य ज्ञानरक्षा तपः सर्वसंवादो दुःखसंक्षयः सुखावि-

---

कैसें आणिक । ह्मणतिलें तरी ॥ ८६ ॥ सरोवरातीरीं । मनुष्य जळाभीतरीं । अधोमुखाकारी । होऊनि दिसे ॥८७॥ ह्मणून तटाकतीरीं राहून । पाहिलें बुद्धिपूर्वक होऊन । तरीं ते अधोमुख रूप नयनीं । दिसत असे ॥ ८८ ॥ तैसे अहंकारी संबंधीं जीव । भावादिक तें मिथ्या सर्व । प्रत्यगात्मा स्वमेव । आपण ह्मणोनि ॥८९॥ ओळखिलें जरी जीवित्व । तरी जीवित्वादिक हेतु । प्रपंच असे दिसत । तया कारणें ॥१०९०॥ जीवन्मुक्तासि प्रारब्ध । भोगव्यवहार संबंध । अंगीकार सहजसिद्ध । ह्मणोनि जाणावें ॥९१॥

## जीवन्मुक्तसद्गुण.

ओव्याः--आणिक त्या जीवन्मुक्तालागून । मैत्री करुणा मुदित उपेक्षा ह्मणौन। सद्गुण चतुर्विध ॥९२॥ त्याचें ठायीं । सत्पुरुषासंयोगे अंतीं । स्नेहविश्वास प्रीति। तादात्म्य तदुत्तररति । ती मैत्री ह्मणवी ॥९३॥ दुःखात्मक समस्त । जीवाचे ठायीं कृपादयाहितार्थ । गुणदोष न देखे किंचित । ते करुणा ह्मणवी ॥९४॥ पुण्याधिकारि विशेष । तया देखोनि हर्ष । आनंद अति संतोष । तें मुदित ह्मणवी ॥ ९५ ॥ पापात्मक सर्वही । देखोनि त्याचे ठायीं । रागद्वेष नाहीं । ती उपेक्षा ह्मणवी ॥ ९६ ॥

## जीवन्मुक्तप्रयोजनपंचक.

ओव्याः--आणिक त्या जीवन्मुक्तासि पढिये । ज्ञानरक्षक तपश्चर्य । सर्वसंवाद दुःखसंक्षय । सुखाविर्भाव ॥९७॥ ह्मणौन क्रमेंकरून । पंचप्रयोजन। असें कारण।

र्भाव इति च पंच प्रयोजनानि संति तेषु वासनाक्षयमनोनाशाभ्यां बु-
द्धिर्निर्मला सती वर्तमाना ज्ञानरक्षा। अनंतरं तदुक्तरेंद्रियमनसोरेकाग्र-
तैव तप उच्यते। अनंतरं तपोनिष्ठं जीवन्मुक्तमाबालपंडिताः सर्वे योगी-
श्वर इति स्तुतिनमस्कारादिभिर्बहुमान्यतावत्वेन पूजयंतीति यत् स
सर्वसंवाद उच्यते अनंतरमविद्यास्मितादिक्लेशराहित्यमेव दुःखसंक्षय
उच्यते। अनंतरं तैः साधनैस्तस्यैकस्यापि प्रतिबंधस्य विरह एव सु-
खाविर्भावो भवति ॥

## ज्ञानचिन्हानि.

॥ श्लोक ॥ अक्रोधवैराग्यजितेंद्रियत्वं दांतिः क्षमा सर्वजनप्रियत्वं।
निर्लोभदातृत्वमशोकमोहौ ज्ञानस्य चैवं दश लक्षणानि ॥

## गुणप्राचुर्यं

अनन्तरं ज्ञानी जीवन्मुक्तः प्रायशः केषां सहवासं समाचरति
केन केन गुणेनाभिरुच्यमानो लीलानटनं करोतीयुक्तौ अहिंसा, प-
रोपकार, शौच, तपस्सत्य, शांति, दांति, तितिक्षा, दया दाक्षिण्य,

---

त्याचे ठायीं ॥ ९८ ॥ वासनाक्षय मनोनाश। अंतःकरणस्फूर्ति निरास। अहंकार
निःशेष। गलितमय ॥९९॥ चित्तनिर्मलप्रकाश। बुद्धि स्वच्छ विकास। सततो-
दित होऊनि असे। तें ज्ञानरक्षक ह्मणवी ॥११००॥ तत्संनिधानें इंद्रियप्रधान।
मन तयासिग्रह इंद्रियदमन। स्वस्वरूपीं एकाग्रधारण। तें तपश्चर्य ह्मणवी ॥१॥
तपोनिष्ठ जीवन्मुक्त। तयासि आबाळपंडितांत। सकळ येऊन वंदित। योगेश्वर
ह्मणोनि ॥२॥ स्तुति नमस्कार। सेवा पूजोपचार। बहुमान आदर। ते सर्व संवाद
ह्मणवी ॥ ३ ॥ अस्मितेत्यादि मुख्य। क्लेशपंचक। निरसन तें दुःख। तें संक्षय
ह्मणवी ॥४॥ या साधनें करूनि कांहीं। आपणासि एकही। प्रतिबंध नाहीं। तें
सुखाविर्भाव ह्मणवी ॥५॥

## ज्ञानचिन्ह.

ओव्याः--आणिक अक्रोध वैराग्यत्व। जितेंद्रियत्व। दमक्षमाजनप्रियत्व। अ-
लोभदाता॥६॥अभयनिर्बंध। ह्मणिजे विशेष। ज्ञानियासि दशविध। चिन्ह असे*॥७॥

---

## गुणप्राचुर्य.

*यानन्तर ज्ञानी जीवन्मुक्त। प्रायः यांचें गुण समस्त। परिसावें देवोनिचित्त।
भक्ति भावें ॥१॥ अहिंसापरोपकार शौचता। तपसत्यशांतिदमता। तितिक्षादया

पुढें चालूं

मृदुत्व, विरक्ति, पुण्य, विवेक, परिशुद्धि श्रवणादिसाधन, दीनत्व, दैवभक्तिप्रमुखान् गुणान् प्रकटयंस्तादृशेषु विशेषतस्संचरति॥

## लोकस्य ज्ञानिप्रयोजनम्

पुनर्जीवन्मुक्तेन मर्त्येन शिष्यो भक्त उदासितः ॥ पापसंयुक्तमनुजो ह्यनुग्राह्या इमे सदा ॥ तदनुग्रहसंसिद्धिः कथमित्यत्र संश्रृणु ॥ तत्त्वोपदेशं कुर्वंति जीवन्मुक्ते शिष्यस्य विश्वासेन मुक्तिरनंतरमनुरागेण तदाराधकभक्तस्य सुकृतातिशयः ॥ अनंतरं तस्य सच्चरित्रं पश्यत उदासीनस्य पुण्यकृत्याभिरतिस्तस्य दर्शनस्पर्शनादिभिः पापिनः पापक्षयो भवतीति सर्वत्रान्वयः ॥

## उपदेशसंगति

अनंतरमत्र कर्तृत्वादिबंधरहितजीवन्मुक्तेन वेदांतवाक्यशक्तितात्पर्यानुकूलतर्कदृष्टांतादिभिर्यत्नपुरस्सरं ब्रह्मोपदेशादिकं कथं घटत इत्युक्ते अतिरोहितब्रह्मस्वरूपतया रागद्वेषादिरहितेश्वरस्यानुग्राह्यनिग्रा-

---

## ज्ञान्यापासून या लोकांस प्रयोजन.

ओव्याः--आणिक त्या जीवन्मुक्तापासून । शिष्यभक्त उदासीन पापिष्ठादि चतुर्विध जनांलागून । अनुग्रह होय ॥८॥ त्याचे ठायीं । तो जीवन्मुक्त कृपावशें । तत्वोपदेश करीतसे । त्याचे ठायीं शिष्यासि विश्वासें । मुक्ति लाभे ॥ ९ ॥ तयाचे अनुरागें विहीत । करिती आराधन यथाशक्त । तया भक्तासि सुकृत । अतिशयें लाभे ॥११०॥ तयासि सच्चरित्रस्थिती । देखोन उदासीन करिती । तयासि पुण्यकृति । अभिरति लाभे ॥११॥ तयाचें दर्शन । स्पर्शनें करून । पापियाचें दारुण । पाप क्षय पावे ॥१२॥

## उपदेशसंगति.

ओव्याः--आणिक येथें कर्तृत्वादिक मुख्यें । कर्म नसे किंचित्येक । जीवन्मुक्तासि विशेष । वेदवाक्यें ॥१३॥ शक्ति तात्पर्य अनुकूल तर्क । दृष्टांतयत्नपूर्वक । ब्रह्मोपदेशादिक । कैसें घडे ह्मणतिलें तरी ॥१४॥ अति रोहितमय । ब्रह्मस्वरूप होय ।

---

मागीलपानावरून—
दाक्षिण्यमृदुता । ऐसें जाणावें ॥२॥ जे विवेकपरिशुद्ध असति । श्रवणादिसाधनासक्ति शिवस्वरूपठेवुनि चित्ति । वागती हे सज्जन ॥३॥

( या ओव्या कानडी पुस्तकाच्या आधारें केल्या आहेत. )

ह्यजनानां सुकृतदुष्कृतवशेनानुग्रहनिग्रहचेष्टासंबंधवत् साधकानां सुकृतादिप्रभावेन ज्ञानिन उपदेशादिकं घटत इति सिद्धं भवति ॥

## जीवन्मुक्तप्रारब्धदशा

अनंतरमत्र जीवन्मुक्ता एवं प्रकारेण स्थित्वोक्तलक्षणेन बहुप्रकारतया वर्तंत इति कथमित्युक्ते प्रारब्धकर्मसंस्कारस्तु तीव्र इति मध्य इति मंद इति सुप्त इति चतुःप्रकारतया वर्तते तेषु सम्यग्ज्ञानिन्यपि भोगलालसीभूते पशुवदात्मप्रीतिमात्रसद्भाव इव तीव्र इत्युच्यते भोगसुख्यत्वेऽपि स्वयमात्मतत्परः सन् बालकवद्विनोदेन वर्तमानो यः स मध्यमसंस्कार इत्युच्यते सकलान्भोगान्त्यत्क्वा परमात्मन्येव तत्परः सन् सुरतसुखमिथुनवन्निजानंदेन यो वर्तते तद्भावो मंदसंस्कार उच्यते सर्वव्यापारान् निवृत्य निरुपाधिकात्मन्येव तत्परःसन् परममुक्तवत् परमसुखेन यो वर्तते तद्भावः सुप्तसंस्कार उच्यते अनंतरमेवं चतुर्विधभूतप्रारब्धसंस्कारवशेन जीवन्मुक्ताः नानाविधवर्तनैः स्थिता

---

त्यालागीं रागद्वेषद्वय । विरहित ईश्वरासि ॥१५॥ अनुग्राह्य निग्राह्य आपैसें । जनाचे सुकृत दुष्कृतवशें । अनुग्रहनिग्रह जैसे । चेष्टा घडत असे ॥१६॥ तैसें साधकाचेनि । सुकृत प्रभावें करूनि । जना उपदेश ह्मणोनि । निश्चय सिद्ध ॥१७॥

## जीवन्मुक्तप्रारब्ध.

ओव्याः--आणिक जीवन्मुक्तालागून । इतुकें सांगितलें लक्षण । पूर्वक असावें तरि तें बहु भिन्न । असें ह्मणतिलें तरी ॥ १८ ॥ प्रारब्धकर्मसंस्कार तो आपण । तीव्र मध्य मंद सुप्त ह्मणोन । चतुर्विध प्रकार होऊन । असे त्याचे ठायीं ॥१९॥ सम्यग् ज्ञानिवर । झाला जरी विशेषाकार । परिभोगाचे ठायीं तत्पर । पूर्वक होऊनि असे ॥११२०॥ पशुन्यायें साचार आत्मप्रीति मात्र । असे तो तीव्र । संस्कार ह्मणवी ॥२१॥ भोगाचे ठायीं मुख्यत्व । प्रवर्तला तरी सावधत्व । आपण आत्मतत्त्व । रत होऊनि असे ॥२२॥ बालका परिलक्षण । असंशयपण । विनोदार्थ असे आपण । तो मध्यसंस्कार ह्मणवी ॥२३॥ सकळ भोगोपचार । परित्यागुनि असार । निजतत्त्वीं तत्पर । होऊनि असे ॥२४॥ सुरतसुख । मैथुनाऐसें विशेख । निजानंदीं असे पूर्वक । तो मंदसंस्कार ह्मणवी ॥ २५ ॥ सकळ व्यापार । परि त्यागुनि निर्विकार । पणें निरोपाधिक वर । आत्म्याचे ठायीं ॥ २६ ॥ होऊनिया तत्पर । परमुक्त ऐसे अपार । परम सुखें असे स्थिर । तो सुप्तसंस्कार ह्मणवी

अपि ऋजुकुटिलगतीनां नदीनां समुद्रसंबंधवदंते ब्रह्मस्वरूपाः पूर्णैक-प्रकारमुक्तिसुखस्वरूपाः संतो वर्तंत इति समानं ॥

## प्रारब्धत्रयम्

अनंतरमिच्छाप्रारब्धानीच्छाप्रारब्धपरेच्छाप्रारब्धानीति त्रिविध प्रारब्धकर्माणि देवतादिभिरपि निवारयितुमशक्यानि तेष्वपथ्यसेवनादिकं स्वस्य प्राप्तव्यानर्थतया ज्ञातमपि परित्यक्तुमशक्यतया कारयतीति यत् तदिच्छाप्रारब्धमुच्यते ॥ इदं न करोमीत्युक्तावपि हिंसादिकं राजाज्ञावत् बलात्कारेण कारयतीति यत् तदनिच्छाप्रारब्धमुच्यते स्वस्योभयाभावेऽपि परेषां दाक्षिण्यादिना सुखदुःखे भोजयतेति यत् तत्परेच्छाप्रारब्धमुच्यते ॥

## जीवन्मुक्ताः

एवं त्रिविधप्रारब्धानुसारेण जीवन्मुक्तानां विचित्रचरित्राणि सन्तीति सिद्धं भवति । अनंतरं॥ श्लोकः ॥ अस्मिन्नर्थे हि सनको जनको भरतो मुनिः॥याज्ञवल्क्यः शुको योगी प्रल्हादो वामदेवकः॥ गौतमोऽ

---

॥२७॥ इति चतुर्विध प्रकार । प्रारब्ध कर्म संस्कार । वसे जीवन्मुक्तासि नानाविचित्र । वर्तणुक असली तरी ॥२८॥ ऋजु कुटिल गति ऐसें । नदीसमुद्रगामित्व जैसे । तैसें आदि अंतीं समरसें । ब्रह्मस्वरूप होऊनि ॥२९॥ निजमुक्तात्मक। आपण एकेक । ( आपण आपे एक ) प्रकारें असतीसुख । स्वरूपसत्य ॥ ११३०॥

## प्रारब्धत्रय.

ओव्याः--आणिक इच्छा प्रारब्ध । परेच्छा प्रारब्ध । अनिच्छा प्रारब्ध । ह्मणोनिया ॥३१॥ प्रारब्ध त्रय । देवतादिकांसि वारावया । अशक्य न जायआया । त्याचे ठायीं ॥३२॥ अपथ्य सेवनादिक । आपणासि जे लभ्यार्थ कांहीं एक । येणार तें येईल ह्मणोनि मुख्य । ओळखिलें तरीं ॥३३॥ बुद्धिपूर्वक विशेष। व्यापार समरसें । विचरत असे । ते इच्छाप्रारब्ध ह्मणवी ॥ ३४॥ मी न करी ह्मणितलें तरी । हिंसादि कर्म राजाज्ञे परि । करवी बळात्कारें । ते अनीच्छा ॥३५॥ प्रारब्ध ह्मणवी अनिच्छा । नाहीं तरी परापेक्षा । संयोगे भोगवी सुखदुःख । ते परइच्छा प्रारब्ध ह्मणवी ॥३६॥

## जीवन्मुक्त.

ओव्याः--या त्रिविध प्रारब्धाचेनि । जीवन्मुक्ता लागूनि । विचित्र चरित्र असे ह्मणोनि । निश्चयसिद्ध ॥३७॥ आणिक यथार्थें सनकजनक । भरत याज्ञवल्क्यशु-

